*Prescribed by the Board of Secondary Education West Bengal for the School Final Examinations of 1961–2 and for the Higher Secondary Examinations of 1961–1963.*

# संस्कृतपाठमाला



पश्चिमवङ्ग-मध्यशिक्षा-पर्षदो

नियोगतः प्रकाशिता

१३३ए, रासविहारी एभेन्यु, कलिकाता–२९स्थ-

जिज्ञासा-समाख्येन प्रकाशनप्रतिष्ठानेन

पश्चिमवङ्ग-मध्यशिक्षा-पर्षदो नियोगतो जिज्ञासाया:
श्रीश्रीशकुमारकुण्डेन प्रकाशिता



पञ्चमं संस्करणम्
ईशवीये १९५७-तमे अब्दे प्रथमं प्रकाशनम्
प्रथमं मुद्रणम्— ५०,०००
द्वितीयं मुद्रणम्—१०,०००
तृतीयं मुद्रणम्—५,०००
चतुर्थ मुद्रणम्—६५,०००
पञ्चमं मुद्रणम्—३०,०००
षष्ठं मुद्रणम्—५०,०००

कलिकातास्थ-जनवाणी प्रिण्टर्स एण्ड पब्लिशर्स प्राइवेट लिमिटेड-
मुद्रणालयत: श्रीज्ञानेन्द्रशर्मणा सीसकाक्षरैर्योजिता

# सूचीपत्रम्

## गद्यांशे




# पद्यांशे

विषयाः | पृष्ठाङ्काः

# संस्कृतपाठमाला

## तैत्तिरीयोपनिषत्

### आचार्योपदेशः

सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्। देवपितृकार्याभ्यां न प्रमदितव्यम्।

मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव। यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि। यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणि। श्रद्धया देयम्। अश्रद्धयाऽदेयम्। श्रिया देयम्। ह्रिया देयम्। भिया देयम्। संविदा देयम्। एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनम्। एवमुपासितव्यम्।

---

## मध्यमव्यायोगः

### भीमसेनेन ब्राह्मणपुत्रमोचनम्

भीमसेनः—भोः पुरुष ! मुच्यताम् ।

घटोत्कचः—न मुच्यते । मातुराज्ञया गृहीतो ह्येषः ।

भीम—(आत्मगतम्) कथं मातुराज्ञेति ! अहो ! गुरुशुश्रूषुः खल्वयं तपस्वी ।

माता किल मनुष्याणां दैवतानाञ्च दैवतम् ।
मातुराज्ञां पुरस्कृत्य वयमेतां दशां गताः ॥

(प्रकाशम्) भोः पुरुष ! प्रष्टव्यं खलु तावदस्ति ।

घटो—वद शीघ्रम् ।

भीम—का नाम भवतो माता ?

घटो—श्रूयताम्—हिडिम्बा नाम राक्षसी ।

भीम—(आत्मगतम्) एवं हिडिम्बायाः पुत्रोऽयम् । सदृशो ह्यस्य गर्वः । (प्रकाशम्) भोः पुरुष ! मुच्यताम् ।

घटो—न मुच्यते ।

भीम—भो ब्राह्मण ! गृह्यतां तव पुत्रः । वयमेनमनुगमिष्यामः । क्षत्रियकुलोत्पन्नोऽहम् । मम शरीरेण ब्राह्मणशरीरं विनिमातुमिच्छामि ।

घटो—एवं क्षत्रियोऽयम् । तेनास्य दर्पः । भवतु । इममेव हत्वा नेष्यामि । अथ केनायं वारितः ?

भीम—मया ।

घटो—भवानेवागच्छतु ।

भीम—यदि ते शक्तिरस्ति बलात्कारेण मां नय ।

घटो—किं मां प्रत्यभिजानीते भवान् ?

भीम—मम पुत्र इति जाने ।

घटो—कथं तव पुत्रोऽहम् !

भीम—कथं रुष्यति ? मर्षयतु भवान् । सर्वाः प्रजाः क्षत्रियाणां पुत्रशब्देनाभिधीयन्ते । अत एवं मयाभिहितम् ।

घटो—भीतानामायुधं गृहीतम् ।

भीम—शपामि सत्येन, भयं न जाने ।

घटो—एष ते भयमुपदिशामि । गृह्यतामायुधम् ।

भीम—आयुधमिति । गृहीतमेतत् ।

घटो—कथमिव ?

भीम—काञ्चनस्तम्भसदृशो रिपूणां निग्रहे रतः ।
अयं तु दक्षिणो बाहुरायुधं सहजं मम ।।

घटो—इदमुपपन्नं पितुर्मे भीमसेनस्य ।

भीम—अथ कोऽयं भीमः ।

विश्वकर्ता शिवः कृष्णः शक्रः शक्तिधरो यमः ।
एतेषु कथ्यतां भद्र केन ते सदृशः पिता ।।

घटो—सर्वैः ।

भीम—धिक् अनृतमेतत् ।

घटो—कथं कथमनृतम् ? क्षिपसि मे गुरुम् ? भवतु । इमं स्थूलं वृक्षमुत्पाट्य प्रहरामि । (उत्पाट्य प्रहरति) कथमनेनापि न शक्यते हन्तुम् ! भवतु, दृष्टम् । एतद् गिरि-

कूटमुत्पाट्य प्रहरामि। कथमनेनापि न शक्यते हन्तुम्! भवतु, दृष्टम्। अस्ति मातृप्रसादाल्लब्धो मायापाशः। तेन बद्ध्वैनं नयामि। (आचम्य मन्त्रं जपति)

भोः पुरुषः।

मायापाशेन बद्धस्त्वं विवशोऽनुगमिष्यसि।
राजसे रज्जुभिर्बद्धः शक्रध्वज इवोत्सवे।।

(इति मायया बध्नाति)

भीम—अस्ति महेश्वरप्रसादाल्लब्धो मायापाशमोक्षो मन्त्रः। तं जपामि। (मन्त्रं जपति)

घटो—अये! पतितः पाशः। किमिदानीं करिष्ये? भवतु, दृष्टम्। भोः पुरुषः। पूर्वसमयं स्मर।

भीम—समय इति। एष स्मरामि। गच्छाग्रतः। (उभौ परिक्रामतः)

घटो—तिष्ठ तावत्। त्वदागमनमम्बायै निवेदयामि।

भीम—बाढम्, गच्छ।

घटो—(उपसृत्य) अम्ब! अयमभिवादये। चिराभिलषितो भवत्या आहारार्थमानीतो मानुषः।

हिडिम्बा—(प्रविश्य) जात! चिरं जीव। कीदृशो मानुष आनीतः?

घटो—भवति! रूपमात्रेण मानुषो न वीर्येण।

हिडिम्बा—यद्येवं, पश्यामि तावदेनम्। (उभौ परिक्रामतः) किमेष मानुष आनीतः?

घटो—भवति! कोऽयम्?

हिडिम्बा—उन्मत्तक ! दैवतं खल्वस्माकम् ।

घटो—आः ! कस्य दैवतम् ?

हिडिम्बा—तव च मम च ।

घटो—कः प्रत्ययः ?

हिडिम्बा—एष प्रत्ययः । जयत्वार्यपुत्रः ।

---

# पञ्चतन्त्रम्

## पञ्चतन्त्रकथामुखम्

सकलार्थशास्त्रसारं जगति समालोक्य विष्णुशर्मेदम् ।
तन्त्रैः पञ्चभिरेतच्चकार सुमनोहरं शास्त्रम् ॥

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्। तत्र सकलार्थिसार्थकल्पद्रुमः सकलकलापारं गतोऽमरशक्तिर्नाम राजा बभूव। तस्य त्रयः पुत्राः परमदुर्मेधसो वसुशक्तिरुग्रशक्तिरनेकशक्तिश्चेतिनामानो बभूवुः। अथ राजा तान् शास्त्रविमुखानालोक्य सचिवानाहूय प्रोवाच—भोः ! ज्ञातमेतद् भवद्भिर्यन्ममैते पुत्राः शास्त्रविमुखा विवेकरहिताश्च। तदेतान् पश्यतो मे महदपि राज्यं न सौख्यमावहति। अथवा साध्विदमुच्यते—

अजातमृतमूर्खेभ्यो मृताजातौ सुतौ वरम् ।
यतस्तौ स्वल्पदुःखाय यावज्जीवं जडो दहेत् ॥

किं तया क्रियते धेन्वा या न सूते न दुग्धदा ।
कोऽर्थः पुत्रेण जातेन यो न विद्वान् न भक्तिमान् ।।

तदेषां यथा बुद्धिप्रकाशो भवति तथा कोऽप्युपायोऽनुष्ठीयताम् । अत्र च मद्दत्तां वृत्तिं भुञ्जानानां पण्डितानां पञ्चशती तिष्ठति । ततो यथा मम मनोरथाः सिद्धिं यान्ति तथानुष्ठीयतामिति ।

तत्रैकः प्रोवाच––देव ! द्वादशभिर्वर्षैर्व्याकरणं श्रूयते । ततो धर्मशास्त्राणि मन्वादीनि अर्थशास्त्राणि चाणक्यादीनि कामशास्त्राणि वात्स्यायनादीनि । एवं च ततो धर्मार्थकामशास्त्राणि जायन्ते । ततः प्रतिबोधनं भवति ।

तन्मध्यतोऽथापरः सुमतिनामा प्राह––अशाश्वतोऽयं जीवितव्यविषयः, प्रभूतकालज्ञेयानि शब्दशास्त्राणि । तत् संक्षेपमात्रं शास्त्रं किञ्चिदेतेषां प्रबोधनार्थं चिन्त्यतामिति । उक्तं च––

अनन्तपारं किल शब्दशास्त्रं
स्वल्पं तथायुर्बहवश्च विघ्नाः ।
सारं ततो ग्राह्यमपास्य फल्गु
हंसैर्यथा क्षीरमिवाम्बुमध्यात् ।।

तदत्रास्ति विष्णुशर्मा नाम ब्राह्मणः सकलशास्त्रपारंगमश्छात्रसंसदि लब्धकीर्तिः । तस्मै समर्पयत्वेतान् । स नूनं द्राक् प्रबुद्धान् करिष्यतीति ।

स राजा तदाकर्ण्य विष्णुशर्माणमाहूय प्रोवाच––भो भगवन्! मदनुग्रहार्थमेतानर्थशास्त्रं प्रति द्राग् यथानन्यसदृशान् विदधासि तथा कुरु । तदहं त्वां शासनशतेन योजयिष्यामि ।

अथ विष्णुशर्मा तं राजानमूचे—देव ! श्रूयतां मे तथ्यवचनम्। नाहं विद्याविक्रयं शासनशतेनापि करोमि। पुनरेतांस्तव पुत्रान् मासषट्केन यदि नीतिशास्त्रज्ञान् न करोमि ततः स्वनामत्यागं करोमि।

अथासौ राजा तां ब्राह्मणस्यासंभाव्यां प्रतिज्ञां श्रुत्वा ससचिवः प्रहृष्टो विस्मयान्वितस्तस्मै सादरं तान् कुमारान् समर्प्य परां निर्वृतिमाजगाम। विष्णुशर्मणापि तानादाय तदर्थं मित्रभेदमित्रप्राप्तिकाकोलूकीयलब्धप्रणाशापरीक्षितकारकाणि चेति पञ्च तन्त्राणि रचयित्वा पाठितास्ते राजपुत्राः। तेऽपि तान्यधीत्य मासषट्केन यथोक्ताः संवृत्ताः। ततः प्रभृत्येतत् पञ्चतन्त्रं नाम नीतिशास्त्रं बालावबोधनार्थं भूतले संप्रवृत्तम्।

---

## धर्मबुद्धिपापबुद्धिकथा

कस्मिंश्चिद्देशे धर्मबुद्धिः पापबुद्धिश्च द्वे मित्रे प्रतिवसतः स्म। अथ कदाचित् पापबुद्धिना चिन्तितम्—यदहं तावन्मूर्खो दारिद्र्योपेतश्च तदेनं धर्मबुद्धिमादाय देशान्तरं गत्वा, अस्याश्रयेण अर्थोपार्जनं कृत्वा, एनमपि वञ्चयित्वा सुखी भवामि।

अथान्यस्मिन्नहनि पापबुद्धिर्धर्मबुद्धिं प्राह—भो मित्र ! वार्द्धकभावे किमात्मचेष्टितं स्मरिष्यसि ? देशान्तरमदृष्ट्वा कां शिष्टजनवार्तां कथयिष्यसि ? उक्तञ्च—

विद्यां वित्तं शिल्पं तावन्नाप्नोति मानवः सम्यक्।
यावद् व्रजति न भूमौ देशाद्देशान्तरं हृष्टः॥

अथ तद्वचनमाकर्ण्य प्रहृष्टमनास्तेनैव सह गुरुजनानुज्ञातः शुभेऽहनि देशान्तरं प्रस्थितः। तत्र च धर्मबुद्धिप्रभावेण भ्रमता पापबुद्धिनापि प्रभूततरं वित्तमासादितम्। ततश्च तौ द्वावपि प्रभूतोपार्जितवित्तौ प्रहृष्टौ स्वगृहं प्रत्यौत्सुक्येन प्रस्थितौ।

अथ स्वस्थानसमीपवर्तिना पापबुद्धिना धर्मबुद्धिरभिहितः—भद्र! न सर्वमेतद्धनं गृहं नेतुं युज्यते, यतः कुटुम्बिनो बान्धवाश्च प्रार्थयिष्यन्ति। तदत्रैव वनगहने क्वापि भूमौ निक्षिप्य किञ्चिन्मात्रमादाय गृहं प्रविशावः। भूयोऽपि प्रयोजने सञ्जाते तन्मात्रं समेत्यास्मात् स्थानान्नेष्यावः। तदाकर्ण्य धर्मबुद्धिराह—भद्र! एवं क्रियताम्। तथानुष्ठिते द्वावपि तौ स्वगृहं गत्वा सुखेन स्थितवन्तौ।

अथान्यदा पापबुद्धिर्निशीथे तत्रागत्य सर्वं वित्तमादाय गर्तं पूरयित्वा स्वभवनं जगाम। अथान्येद्युर्धर्मबुद्धिं समेत्य प्रोवाच—सखे! बहुकुटुम्बावावां वित्ताभावात् सीदावः। तद् गत्वा ततः स्थानात् किञ्चिद् वित्तमानयावः। सोऽब्रवीत्—भद्र! एवं क्रियतामिति।

अथ तौ द्वावपि गत्वा यावत् तत् स्थानं खनतस्तावत् रिक्तं भाण्डं दृष्टवन्तौ। अत्रान्तरे पापबुद्धिः स्वशिरस्ताडयन् प्रोवाच—भो धर्मबुद्धे! त्वया हृतमेतद्धनम्, नान्येन; यतो भूयोऽपि गर्तापूरणं कृतम्। तत् प्रयच्छ मे तस्यार्धम्; नो चेद् राजकुले निवेदयिष्यामि। स आह—भो दुरात्मन्! मैवं वद। धर्मबुद्धिः खल्वहम्। नैतच्चोरकर्म करोमि।

एवं द्वावपि तौ विवदमानौ धर्माधिकरणं गतवन्तौ प्रोचतुः

परस्परं दूषयन्तौ । अथ तौ धर्माधिकरणाधिष्ठितपुरुषैर्दिव्यार्थं यावन्नियोजितौ, तावत् पापबुद्धिराह—अहो ! न सम्यग्दृष्टो न्यायः । उक्तञ्च—

विवादेऽन्विष्यते पत्रं पत्राभावे तु साक्षिणः ।
साक्ष्यभावात् ततो दिव्यं प्रवदन्ति मनीषिणः ।।

तदत्र विषये वृक्षदेवता मम साक्षिभूता तिष्ठति । सापि आवयोरेकतरं चोरं साधुं वा करिष्यति । अथ तैः सर्वैरभिहितम्—भोः ! युक्तमुक्तं भवता । तदस्माकमप्यत्र विषये महत् कौतूहलं वर्तते । तत् प्रत्यूषसमये युवाभ्यामस्माभिः सह तत्र वनोद्देशे गन्तव्यमिति ।

एतस्मिन्नन्तरे पापबुद्धिर्गृहं गत्वा स्वं जनकमुवाच—तात ! प्रभूतोऽयं मयार्थो धर्मबुद्धेश्चोरितः । स च तव वचनेन परिणतिं यास्यति । अन्यथास्माकं प्राणैः सह यास्यति । स आह—वत्स ! तद् वद द्रुतम्, येन तद् द्रव्यं स्थिरतां नयामि । पापबुद्धिराह—तात ! अस्ति तत्र प्रदेशे महाशमी । तस्यां महत् कोटरमस्ति । तत्र त्वं साम्प्रतमेव प्रविश । ततः प्रभातेऽहं यदा सत्यश्रावणं करोमि, तदा त्वया वाच्यम्—धर्मबुद्धिश्चोर इति ।

तथानुष्ठिते प्रत्यूषे पापबुद्धिः स्नात्वा धौतप्रावरणो धर्मबुद्धिपुरःसरो धर्माधिकरणिकैः सह तां शमीमभ्येत्य तारस्वरेण प्रोवाच—भगवति वनदेवते ! आवयोर्मध्ये यश्चोरस्तं कथय । अथ पापबुद्धिपिता शमीकोटरस्थः प्रोवाच—भोः ! शृणुत । धर्मबुद्धिनापहृतमेतद्धनम् ।

तदाकर्ण्य सर्वे ते राजपुरुषा विस्मयोत्फुल्ललोचना यावद्धर्म-

बुद्धेर्वित्तहरणोचितं निग्रहं शास्त्रदृष्टयावलोकयन्ति, तावद्धर्मबुद्धिना तच्छमीकोटरं वह्निभोज्यद्रव्यैः परिवार्य वह्निना सन्दीपितम् ।

अथ ज्वलति तस्मिन् शमीकोटरेऽर्धदग्धशरीरः स्फुटितेक्षणः करुणं परिदेवयन् पापबुद्धिपिता निश्चक्राम । ततस्तैः सर्वैः पृष्टः सर्वं पापबुद्धिचेष्टितं निवेदयामास । अथ ते राजपुरुषाः पापबुद्धिं शमीशाखायां प्रतिलम्ब्य धर्मबुद्धिं प्रशस्येदमूचुः—अहो ! साध्विदमुच्यते—

उपायं चिन्तयेत् प्राज्ञस्तथापायं च चिन्तयेत् ।

तदेतेन पापबुद्धिनोपायश्चिन्तितो नापायः । ततस्तत्फलं प्राप्तम् ।

---

## जीर्णधनकथा

अस्ति कस्मिंश्चिदधिष्ठाने जीर्णधनो नाम वणिक्पुत्रः । स च विभवक्षयाद् देशान्तरगमनमचिन्तयत् । यतः—

यत्र देशेऽथवा स्थाने भोगा भुक्ताः स्ववीर्यतः ।
तस्मिन् विभवहीनो यो वसेत् स पुरुषाधमः ।।

तस्य गृहे लोहपलसहस्रघटिता पूर्वपुरुषोपार्जिता तुलास्ति । ताञ्च श्रेष्ठिलक्ष्मणस्य निक्षेपभूतां कृत्वा देशान्तरं प्रस्थितः ।

ततश्च सुचिरं यदृच्छया देशान्तरेषु भ्रमित्वा पुनस्तदेव नगरं समागम्य तं श्रेष्ठिनं जगाद—भोः श्रेष्ठिन् ! समर्पय

मे निक्षेपतुलाम्। ततो लक्ष्मणः प्राह—भोः! त्वदीया तुला मूषिकैर्भक्षिता।

तच्छ्रुत्वा जीर्णधन आह—भो लक्ष्मण! नास्ति दोषस्ते यदि सा मूषिकैर्भक्षितेति। यतः ईदृगेवायं संसारः। न किञ्चिदत्र शाश्वतमस्ति। परमहं नद्यां स्नानार्थं गमिष्यामि। ततस्त्वं धनदेवनामानमात्मीयं पुत्रं मया सह स्नानोपकरणहस्तं प्रेषयेति।

सोऽपि लक्ष्मणो निजचौर्यशङ्कितः पुत्रं धनदेवमुवाच—वत्स! पितृव्योऽयं तव स्नानार्थं नद्यां यास्यति। तद् गम्यतामनेन सार्धं स्नानोपकरणमादाय इति। अथासौ लक्ष्मणपुत्रः स्नानोपकरणमादाय प्रहृष्टमनास्तेन सह नद्यां गतः।

अथ वणिक् नद्यां स्नात्वा तं लक्ष्मणपुत्रं नदीगुहायां प्रक्षिप्य तद्द्वारे बृहच्छिलां दत्त्वा लक्ष्मणगृहमायातः। लक्ष्मणेन पृष्टः—भो अभ्यागत! कथ्यतां क्व मे पुत्रो धनदेवस्त्वया सह गतः स्थितवानिति। स आह—भो लक्ष्मण! नदीतटात् श्येनेनापहृत इति।

लक्ष्मण आह—अतथ्यवादिन्, महाकायं धनदेवं कथमिव श्येनोऽपहरति? वणिग् अब्रवीत्—भो लक्ष्मण। मूषिकाः पुनर्लौहमयीं तुलां न भक्षयन्ति। तदर्पय मे तुलां यदि पुत्रेण प्रयोजनम्।

एवं तौ विवदमानौ द्वावपि राजद्वारं गतौ। तत्र लक्ष्मणस्तारस्वरेण प्रोवाच—भो अब्रह्मण्यमब्रह्मण्यम्! मम पुत्रो धनदेवनामा अनेनापहृतः।

अथ धर्माधिकारिणस्तमूचुः—भोः ! समर्पय लक्ष्मणपुत्रम् । स जगाद—किं करोमि ? पश्यतो मे नदीतटात् श्येनेन नीतः । ते प्रोचुः—भोः ! न सत्यमुक्तं त्वया । किं श्येनः पञ्चदशवार्षिकं पुत्रमपहर्तुं शक्नोति ? ततः स विहस्य प्रोवाच—भोः ! श्रूयतां—

तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः ।
श्येनः कुञ्जरहृत्तत्र किं चित्रं यदि पुत्रहृत् ।।

ते प्रोचुः—कथमेतत् ? ततः श्रेष्ठी तेषां तुलावृत्तान्तमकथयत्। तं श्रुत्वा विहस्य एकस्य तुलामपरस्य पुत्रं समर्पयामासुः ।

---

## सोमिलकाख्यानम्

कस्मिंश्चिदधिष्ठाने सोमिलको नाम कौलिको वसति स्म । स चानेकविधपट्टरचनारञ्जितानि पार्थिवोचितानि सदैव वस्त्राण्युत्पादयति । परं तस्य चानेकविधपट्टरचनानिपुणस्यापि न भोजनाच्छादनादभ्यधिकं कथमप्यर्थमात्रं सम्पद्यते । अथान्ये तत्र सामान्यकौलिकाः स्थूलवस्त्रसम्पादनविज्ञानिनो महर्द्धिसम्पन्नाः । तानवलोक्य स स्वभार्यामाह—प्रिये ! पश्यैतान् स्थूलपट्टकारकान् धनकनकसमृद्धान् । तदधारणकं ममैमतत् स्थानम् । तदन्यत्रोपार्जनाय गच्छामि । सा प्राह—भोः प्रियतम ! मिथ्या प्रलपितमेतद्—अन्यत्र गतानां धनं भवति, स्वस्थाने न भवति । तस्मादत्रैव व्यवसायपरो भव ।

कौलिक आह—प्रिये ! न सम्यगभिहितं भवत्या । व्यवसायं विना कर्म न फलति । उक्तञ्च—

(उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥)

तन्मयावश्यं देशान्तरं गन्तव्यम् । इति निश्चित्य वर्धमानपुरं गतः । तत्र च वर्षत्रयं स्थित्वा सुवर्णशतत्रयोपार्जनं कृत्वा भूयः स्वगृहं प्रस्थितः ।

(अथार्धपथे गच्छतस्तस्य कदाचिदटव्यां पर्यटतो भगवान् रविरस्तमुपागतः । तदासौ व्यालभयात् स्थूलतरवटस्कन्धमारुह्य यावत् प्रसुप्तस्तिष्ठति तावन्निशीथे स्वप्ने द्वौ पुरुषौ रौद्राकारौ परस्परं प्रजल्पन्तावशृणोत् ।)

तत्रैक आह—भोः कर्तः ! त्वं किं सम्यङ् न वेत्सि यदस्य सोमिलकस्य भोजनाच्छादनाभ्यधिका समृद्धिर्नास्ति ? तत् किं त्वयास्य सुवर्णशतत्रयं दत्तम् ?

स आह—भोः कर्मन् ! मयावश्यं दातव्यं व्यवसायिनाम् । तत्र च तस्य परिणतिस्त्वदायत्तेति ।

(अथ यावदसौ कौलिकः प्रबुद्धः सुवर्णग्रन्थिमवलोकयति तावद् रिक्तं पश्यति । ततः साक्षेपं चिन्तयामास—अहो, किमेतत् ! महता कष्टेनोपार्जितं वित्तं हेलया क्वापि गतम् । तद् व्यर्थश्रमोऽकिञ्चनः कथं स्वपत्न्या मित्राणां च मुखं दर्शयिष्यामि ? )

इति निश्चित्य तदेव पत्तनं गतः। तत्र च वर्षमात्रेणापि सुवर्णशतपञ्चकमुपार्ज्य भूयोऽपि स्वस्थानं प्रति प्रस्थितः। यावदर्धपथे भूयोऽटवीगतस्य भगवान् भानुरस्तं जगाम। अथ सुवर्णनाशभयात् सुश्रान्तोऽपि न विश्राम्यति। केवलं कृत-गृहोत्कण्ठः सत्वरं व्रजति।

अत्रान्तरे द्वौ पुरुषौ दृष्टिदेशे समागच्छन्तौ जल्पन्तौ च शृणोति। तत्रैकः प्राह—भोः कर्तः! किं त्वयैतस्य सुवर्ण-शतपञ्चकं प्रदत्तम्? तत् किं न वेत्सि यद् भोजनाच्छादना-भ्यधिकमस्य किञ्चिन्नास्ति? स आह—भोः कर्मन्! मया-वश्यं देयं व्यवसायिनाम्। तस्य परिणामस्त्वदायत्तः। तत् किं मामुपालम्भयसि?

तच्छ्रुत्वा सोमिलको यावद् ग्रन्थिमवलोकयति तावत् सुवर्णं नास्ति। ततः परं दुःखमापन्नो व्यचिन्तयत्—अहो! किं मम धनरहितस्य जीवितेन। तदत्र वटवृक्ष आत्मानमुद्बध्य प्राणांस्त्यजामि।

एवं निश्चित्य दर्भमयीं रज्जुं विधाय स्वकण्ठे पाशं नियोज्य शाखायामात्मानं निबध्य यावत् प्रक्षिपति, तावदेकः पुमाना-काशस्थ एवेदमाह—भो भोः सोमिलक! मैवं साहसं कुरु। अहं ते वित्तापहारकः। न ते भोजनाच्छादनाभ्यधिकां वराटिकामपि सहामि। तद् गच्छ स्वगृहं प्रति। अन्यच्च, भवदीयसाहसेनाहं तुष्टः। तथा मे न स्याद् व्यर्थं दर्शनम्। तत् प्रार्थ्यतामभीष्टो वरः कश्चित्।

सोमिलक आह—यद्येवं, तद् देहि मे प्रभूतं धनम्। स

आह—भोः ! किं करिष्यसि भोगरहितेन धनेन, यतस्तव भोजनाच्छादनाभ्यधिका प्राप्तिरपि नास्ति। सोमिलक आह—यद्यपि भोगो नास्ति तथापि भवतु मे धनम्।

उक्तञ्च—

कृपणोऽप्यकुलीनोऽपि सज्जनैर्वर्जितः सदा।
सेव्यते स नरो लोके यस्य स्याद्वित्तसञ्चयः॥



## वानरमकरकथा

अस्ति कस्मिंश्चित् समुद्रोपकण्ठे महान् जम्बूपादपः सदाफलः। तत्र च रक्तमुखो नाम वानरः प्रतिवसति स्म। अथ कदाचित् तस्य तरोरधस्तात् करालमुखो नाम मकरः समुद्रसलिलान्निष्क्रम्य सुकोमलवालुकासनाथे तीरोपान्ते न्यविशत। ततश्च रक्तमुखेन स प्रोक्तः—भोः ! भवान् समभ्यागतो मेऽतिथिः। तद् भक्षयतु मया दत्तान्यमृतकल्पानि जम्बूफलानि। एवमुक्त्वा तस्मै जम्बूफलानि ददौ। सोऽपि तानि भक्षयित्वा तेन सह चिरं गोष्ठीसुखमनुभूय भूयोऽपि स्वभवनं गतः। एवं नित्यमेव तौ वानरमकरौ जम्बूच्छायाश्रितौ विविधालापेन कालं नयन्तौ सुखेन तिष्ठतः। सोऽपि मकरो भक्षितशेषाणि जम्बूफलानि गृहं गत्वा स्वपत्न्यै प्रयच्छति।

अथान्यतमे दिवसे तया स पृष्टः—नाथ ! क्व एवंविधान्यमृतकल्पानि फलानि प्राप्नोषि ? स आह—भद्रे ! अस्ति मे परमसुहृद् रक्तमुखो नाम वानरः। स प्रीतिपूर्वमिमानि फलानि

प्रयच्छति । अथ तयाभिहितम्——यः सदैवामृतप्रायाणि ईदृशानि फलानि भक्षयति तस्य हृदयममृतमयं भविष्यति । तद् यदि मया भार्यया ते प्रयोजनं ततस्तस्य हृदयं मह्यं प्रयच्छ, येन तद् भक्षयित्वा जरामरणरहिता त्वया सह भोगान् भुञ्जीय ।

स आह——भद्रे ! मैवं वद, यतः स प्रतिपन्नोऽस्माकं भ्राता । अपरं, व्यापादयितुमपि न शक्यते । तत् त्यजैनं मिथ्याग्रहम् । अथ मकर्याह——यदि तस्य हृदयं न भक्षयामि तन्मया प्रायोपवेशनं कर्तव्यमिति विद्धि ।

एवं तस्यास्तं निश्चयं ज्ञात्वा चिन्ताव्याकुलितहृदयः स प्रोवाच——किं करोमि ? कथं स मे वध्यो भविष्यति ? इति विचिन्त्य वानरपार्श्वमागच्छत् । वानरोऽपि चिरादायान्तं तं सोद्वेगमवलोक्य प्रोवाच——भो मित्र ! किमद्य चिरवेलया समायातोऽसि ? कस्मात् साह्लादं नालपसि ?

स आह——मित्र ! अहं तव भ्रातृजायया निष्ठुरतरैर्वाक्यैरभिहितः——भोः कृतघ्न ! मा मे त्वं स्वमुखं दर्शय, यतस्त्वं मित्रं नित्यमेवोपजीव्य आगच्छसि ; तस्य पुनः प्रत्युपकारं गृहदर्शनमात्रेणापि न करोषि । तत् ते प्रायश्चित्तमपि नास्ति । त्वं चेन्मम देवरं गृहीत्वाद्य प्रत्युपकारार्थं गृहं नागच्छसि, तर्हि त्वया सह मे परलोके दर्शनमिति । तदहं तयैवं प्रोक्तस्त्वत्सकाशमागतः । अद्य तया सह त्वदर्थे कलहायमानस्येयती वेला मे विलग्ना । तदागच्छ मे गृहम् । तव भ्रातृपत्नी द्वारदेशबद्धवन्दनमाला सोत्कण्ठा तिष्ठति ।

मर्कट आह——भो मित्र ! युक्तमभिहितं मे भ्रातृपत्न्या ।

परं वयं वनचराः, युष्मदीयं च जलान्ते गृहम्। तत् कथं शक्यते तत्र गन्तुम्? तस्मात् तामपि मे भ्रातृपत्नीम् अत्रानय, येन प्रणम्य तस्या आशीर्वादं गृह्णामि।

स आह—भो मित्र। अस्ति समुद्रान्ते सुरम्ये पुलिनदेशेऽस्मद्गृहम्। तन्मम पृष्ठमारूढः सुखेनाकुतोभयो गच्छ। सोऽपि तदाकर्ण्य सानन्दमाह—भद्र! यद्येवं, तत् कथं विलम्ब्यते? त्वर्यताम्। एषोऽहं तव पृष्ठमारूढः।

तथानुष्ठिते अगाधजले गच्छन्तं मकरमालोक्य भयत्रस्तमना वानरः प्रोवाच—भ्रातः! शनैः शनैर्गम्यताम्। जलकल्लोलैः प्लावितं मे शरीरम्। तदाकर्ण्य मकरश्चिन्तयामास—असावगाधं जलं प्राप्तो मे वशः सञ्जातः। मत्पृष्ठतस्तिलमात्रमपि चलितुं न शक्नोति। तस्मात् कथयाम्यस्य निजाभिप्रायं, येनाभीष्टदेवतास्मरणं करोति। आह च—मित्र! त्वं मया वधाय समानीतो भार्यावाक्येन विश्वास्य। तत् स्मर्यतामभीष्टदेवता।

स आह भ्रातः! किं मया तस्यास्तवापि चापकृतं, येन मे वधोपायश्चिन्तितः? मकर आह—भोः! तस्यास्तावत्तव हृदयस्य अमृतमयफलरसास्वादनामृष्टस्य भक्षणे दोहदः सञ्जातः। तेनेदमनुष्ठितम्।

प्रत्युत्पन्नमतिर्वानर आह—भद्र! यद्येवं, तत् किं त्वया मम तत्रैव न व्याहृतं, येन स्वहृदयं जम्बूकोटरे सदैव मया सुगुप्तं कृतं, तद् भ्रातृपत्न्या अर्पयामि। त्वयाहं शून्यहृदयोऽत्र कस्मादानीतः?

तदाकर्ण्य मकरः सानन्दमाह—भद्र ! यद्येवं, तदर्पय मे हृदयं येन सा दुष्टपत्नी तद् भक्षयित्वा अनशनादुत्तिष्ठति। अहं त्वां तमेव जम्बूपादपं प्रापयामि। एवमुक्त्वा निवर्त्य जम्बूतलमगच्छत्।

वानरोऽपि तीरमासाद्य दीर्घतरचङ्क्रमणेन तमेव जम्बूपादपमारूढश्चिन्तयामास—अहो ! लब्धास्तावत् प्राणाः। ममैतद् अद्य पुनर्जन्मदिनमिव सञ्जातम्।

अतः साध्विदमुच्यते—

न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत्।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति॥

---

## सिंहशृगालशिशुकथा

कस्मिंश्चिद् वनोद्देशे सिंहदम्पती प्रतिवसतः स्म। अथ सिंही पुत्रद्वयमजीजनत्। सिंहोऽपि नित्यमेव मृगान् व्यापाद्य सिंह्यै ददाति। अथ कदाचित् तेन किमपि नासादितम्। वने भ्रमतोऽपि तस्य रविरस्तं गतः। अथ तेन स्वगृहमागच्छता शृगालशिशुः प्राप्तः। स च बालकोऽयमिति मत्वा यत्नेन दंष्ट्रामध्यगतं कृत्वा सिंह्यै जीवन्तमेव समर्पितवान्।

ततः सिंह्याभिहितम्—भोः कान्त ! आनीतं किञ्चिदस्माकं भोजनं त्वया ? सिंह आह—प्रिये ! मयाद्यैनं शृगालशिशुं परित्यज्य न किञ्चित् सत्त्वमासादितम्। इदानीं त्वमेनं

भक्षयित्वा पथ्यं कुरु। स च मया बालोऽयमिति मत्वा न व्यापादितः।

साह—भोः कान्त! त्वया बालकोऽयमिति मत्वा न व्यापादितः। तदहं कथं स्वोदरार्थे विनाशयिष्यामि ?

उक्तं च—

अकृत्यं नैव कर्तव्यं प्राणत्यागेऽपि संस्थिते।
न च कृत्यं परित्याज्यमेष धर्मः सनातनः॥

तस्मान्ममायं तृतीयः पुत्रो भविष्यति। इत्युक्त्वा तमपि स्वस्तनक्षीरेण पुष्टिमनयत्। एवं ते त्रयोऽपि शिशवः परस्परमज्ञातजातिविशेषा एकत्रविहारिणो बाल्यमतिवाहयन्ति।

अथ कदाचित् तत्र वने भ्राम्यन् वनगजः समायातः। तं दृष्ट्वा तौ सिंहसुतौ द्वावपि कुपिताननौ तं प्रति प्रचलितौ यावत्, तावत्तेन शृगालसुतेनाभिहितम्—अहो! गजोऽयं युष्मत्कुलशत्रुः। तन्न गन्तव्यमेतस्याभिमुखम्। एवमुक्त्वा गृहं प्रधावितः। तावपि ज्येष्ठबान्धवभङ्गान्निरुत्साहतां गतौ।

अथ द्वावपि गृहं प्राप्य पित्रोरग्रतो विहसन्तौ ज्येष्ठभ्रातृचेष्टितमूचतुर्यथा गजं दृष्ट्वा दूरतोऽपि नष्टः। सोऽपि तदाकर्ण्य कोपाविष्टः प्रस्फुरिताधरपल्लवस्ताम्रलोचनो भृकुटिं कृत्वा तौ निभर्त्सयमानः परुषतरवचनान्युवाच।

ततः सिंह्यैकान्ते नीत्वा प्रबोधितोऽसौ—वत्स! मैवं कदाचिज् जल्प। भवदीयलघुभ्रातरावेतौ। अथासौ प्रभूतकोपाविष्टस्तामुवाच—किमहमेताभ्यां शौर्येण कौशलेन वा हीनो येन मामुपहसतः? तन्मयावश्यमेतौ व्यापादनीयौ।

तदाकर्ण्य सिंही तस्य जीवितमिच्छन्ती अन्तर्विहस्य प्राह—

शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक !
यस्मिन् कुले त्वमुत्पन्नो गजस्तत्र न हन्यते ।।

तत् सम्यक् शृणु । वत्स ! त्वं शृगालीसुतः कृपया मया स्वकीयक्षीरदानेन पुष्टिं नीतः। तद् यावदेतौ शिशुत्वात् त्वां शृगालं न जानीतस्तावद् द्रुततरं गत्वा स्वजातिमध्ये भव ; नो चेदाभ्यां हतो मृत्युपथं समेष्यसि। सोऽपि तद्वचनं श्रुत्वा भयव्याकुलमनाः क्षणात् प्रनष्टः।

---

# हितोपदेशः

## भैरवव्याधकथा

आसीत् कल्याणकटकवास्तव्यो भैरवो नाम व्याधः। स कदाचिन्मांसलुब्धो धनुरादाय विन्ध्याटवीमध्यं गतः। तत्र तेन मृग एको व्यापादितः। मृगमादाय गच्छता तेन घोराकृतिः शूकरो दृष्टः। ततस्तेन मृगं भूमौ निधाय शूकरः शरेणाहतः। शूकरेणाप्यागत्य प्रलयघनघोरगर्जनं कुर्वाणेन स व्याधः पाददेशे हतश्छिन्नमूलद्रुम इव पपात।

अथ तयोः पादास्फालनेन कश्चित् सर्पोऽपि मृतः। अत्रान्तरे दीर्घरावो नाम जम्बूकः परिभ्रमन्नाहारार्थी तान् मृतान्

मृगव्याधसर्पशूकरानपश्यत्। आलोक्याचिन्तयच्च—अहो भाग्यम्! महद्भोज्यं मे समुपस्थितम् ; अथवा—

अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम् ।
सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते ।।

भवतु, एषां मांसैर्मासत्रयं मे सुखेन गमिष्यति,—

मासमेकं नरो याति द्वौ मासौ मृगशूकरौ ।
अहिरेकं दिनं याति अद्य भक्ष्यो धनुर्गुणः ।।

ततः प्रथमबुभुक्षायामिदं निःस्वादु कोदण्डाटनीलग्नं स्नायुबन्धनं खादामि । इत्युक्त्वा तथाकरोत् । ततश्छिन्ने स्नायुबन्धने द्रुतमुत्पतितेन धनुषा हृदि भिन्नः स दीर्घरावः पञ्चत्वं गतः ।

---

## ब्राह्मणनकुलकृष्णसर्पकथा

अस्त्युज्जयिन्यां माधवो नाम ब्राह्मणः । तस्य ब्राह्मणी प्रसूता । सा बालापत्यरक्षार्थं ब्राह्मणमवस्थाप्य स्नातुं गता । अथ ब्राह्मणाय राज्ञः पार्वणश्राद्धं दातुमाह्वानमागतम् ।

तत् श्रुत्वा ब्राह्मणः सहजदारिद्र्यादचिन्तयत्—यदि सत्वरं न गच्छामि, तदान्यः कश्चिच्छ्राद्धं ग्रहीष्यति ; उक्तं च—

आदेयस्य प्रदेयस्य कर्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ।।

किन्तु शिशोरत्र रक्षकः कोऽपि नास्ति । तत् किं करोमि ? यातु ; चिरकालपालितममुं सुतनिर्विशेषं नकुलं बालरक्षार्थं व्यवस्थाप्य गच्छामि । तथा कृत्वा गतः ।

ततस्तत्र नकुलेन बालकसमीपमागच्छंस्तूष्णीं कृष्णसर्पो व्यापादितः खण्डितश्च। अथासौ नकुलो ब्राह्मणमायान्तमवलोक्य रक्तविलिप्तमुखपादः सत्वरमुपगम्य तच्चरणयोर्लुलोठ। ततोऽसौ ब्राह्मणस्तं तथाविधं दृष्ट्वा मम पुत्रोऽनेन भक्षित इत्यवधार्य तं व्यापादितवान्। अनन्तरं यावदुपसृत्य पश्यति ब्राह्मणः तावद् बालकः सुस्थः स्वपिति सर्पश्च व्यापादितस्तिष्ठति। ततोऽसौ ब्राह्मणः परं विषादमुपगतः।

योऽर्थतत्त्वमविज्ञाय क्रोधस्यैव वशं गतः।
स तथा तप्यते मूढो ब्राह्मणो नकुलाद् यथा॥

---

## हस्तिशृगालकथा

अस्ति ब्रह्मारण्ये कर्पूरतिलको नाम हस्ती। तमवलोक्य सर्वे शृगालाश्चिन्तयन्ति स्म—यद्ययं केनाप्युपायेन म्रियेत, तदास्माकमेतद्देहेन मासचतुष्टयस्य स्वेच्छाभोजनं भवेत्। ततस्तन्मध्यादेकेन वृद्धशृगालेन प्रतिज्ञातम्—मया बुद्धिप्रभावादस्य मरणं साधयितव्यम्।

(अनन्तरं स वञ्चकः कर्पूरतिलकसमीपं गत्वा साष्टाङ्गपातं प्रणम्योवाच—देव! दृष्टिप्रसादं कुरु। हस्ती ब्रूते—कस्त्वम्? कुतः समायातः? सोऽवदत्—जम्बूकोऽहं सर्वैर्वनवासिभिः पशुभिर्मिलित्वा भवत्सकाशं प्रस्थापितः। यद्विना राज्ञा स्थातुं न युक्तं, तदत्राटवीराज्येऽभिषेक्तुं भवान् सर्वस्वामिगुणोपेतो

निरूपितः। तद् यथा लग्नवेला न चलति तथा कृत्वा सत्वरमागम्यतां देवेन। इत्युक्त्वा उत्थाय चलितः। )

ततोऽसौ राज्यलोभाकृष्टः कर्पूरतिलकः शृगालदर्शितवर्त्मना धावन्महापङ्के निमग्नः। हस्तिनोक्तम्—सखे शृगाल! किमधुना विधेयम्? महापङ्के निमग्नोऽहम्।

( शृगालेन विहस्योक्तम्—देव! मम पुच्छाग्रे हस्तं दत्त्वोत्तिष्ठ। मद्वचसि त्वया विश्वासः कृतस्तस्य फलमेतत्।

तथा चोक्तम्—

यदि सत्सङ्गनिरतो भविष्यसि भविष्यसि।
तथासज्जनगोष्ठीषु पतिष्यसि पतिष्यसि॥)

---

## समुद्रटिट्टिभकथा

(अङ्गाङ्गिभावमज्ञात्वा कथं सामर्थ्यनिर्णयः।
पश्य टिट्टिभमात्रेण समुद्रो व्याकुलीकृतः॥

दक्षिणसमुद्रतीरे टिट्टिभदम्पती निवसतः। अथ टिट्टिभी आसन्नप्रसवा भर्तारमाह—नाथ। प्रसवयोग्यस्थानं निभृतमन्विष्यताम्। टिट्टिभोऽवदत्—प्रिये! ननु इदमेव स्थानं प्रसूतियोग्यम्। सा ब्रूते—समुद्रवेलया व्याप्यते स्थानमेतत्। सोऽब्रवीत्—भद्रे! किमहं निर्बलः? मम गृहावस्थितान्यण्डानि समुद्रेणापहर्तव्यानि?

टिट्टिभी विहस्याह—नाथ! त्वया समुद्रेण च महदन्तरम्।



अथवा—

दुःखमात्मा परिच्छेत्तुं योग्यो वेति न वेति वा ।
अस्तीदृग् यस्य विज्ञानं स कृच्छ्रेऽपि न सीदति ।।

ततः स्वामिवचनात् तत्रैव प्रसूता सा । एतत् सर्वं श्रुत्वा समुद्रेणापि तच्छक्तिज्ञानार्थिना तदण्डान्यपहृतानि । ततस्तु टिट्टिभी शोकार्ता भर्तारमाह—नाथ ! कष्टमापतितम् । अण्डानि मे नष्टानि ।

टिट्टिभोऽवदत्—प्रिये ! मा भैषीः । इत्युक्त्वा पक्षिणां मेलकं कृत्वा पक्षिस्वामिनो गरुडस्य समीपं गतः । ततस्तेन गरुत्मता तद्वचनमाकर्ण्य प्रभुर्भगवान् नारायणः सृष्टिस्थिति-प्रलयहेतुर्विज्ञप्तः । ततो भगवदाज्ञां मौलौ निधाय समुद्रसमीपं गतः । ततस्तद्वचनमाकर्ण्य समुद्रस्तानि अण्डानि समर्पितवान् ।

---

## रजकगर्दभकुक्कुरकथा

आसीत् वाराणस्यां कर्पूरपटो नाम रजकः । स चैकदा निर्भरं प्रसुप्तः । तदनन्तरं तस्य द्रव्याणि हर्तुं तद्गृहं चौरः प्रविष्टः । तस्य प्राङ्गणे गर्दभो बद्धस्तिष्ठति, कुक्कुरश्चोपविष्टः ।

तं चौरमवलोक्य गर्दभः श्वानमाह—भवतोऽयं व्यापारः । तत् किमिति त्वमुच्चैः शब्दं कृत्वा स्वामिनं न जागरयसि ?

कुक्कुरो ब्रूते—नियोगस्यास्य चर्चा त्वया न कार्या । त्वमेव जानासि यथाहमस्य गृहरक्षां करोमि । ततोऽयं चिरान्निर्वृतो





ममोपयोगं न जानाति। तेनाधुना ममाहारदानेऽपि मन्दादरः। विना विधुरदर्शनं स्वामिनोऽनुजीविषु मन्दादरा भवन्ति।

गर्दभो ब्रूते—

याचते कार्यकाले यः स किंभृत्यः स किंसुहृत्।

कुक्कुरो ब्रूते—

यो न सम्भावयेद् भृत्यान् कार्यकाले स किंप्रभुः॥

ततो गर्दभः सकोपमाह—आः! पापीयांस्त्वम्, यः स्वामिकार्योपेक्षां करोषि। भवतु। यथा स्वामी जागर्ति तथा मया कर्तव्यम्। यतः

पृष्ठतः सेवयेदर्कं जठरेण हुताशनम्।
स्वामिनं सर्वभावेन परलोकममायया॥

इत्युक्त्वा सोऽतीव चीत्कारं कृतवान्।

ततः स रजकस्तेन चीत्कारेण प्रबुद्धो निद्राविमर्दकोपादुत्थाय गर्दभं लगुडेन ताडयामास। ततस्तेन ताडनेन गर्दभः पञ्चत्वं गतः।

पराधिकारचर्चां यः कुर्यात् स्वामिहितेच्छया।
स विषीदति चीत्कारात् ताडितो गर्दभो यथा॥



---

## सिंहमार्जारमूषिककथा

अस्त्युत्तरापथे अर्बुदशिखरनाम्नि पर्वते दुर्दान्तो नाम महाविक्रमः सिंहः। (तस्य पर्वतकन्दरमधिशयानस्य केसराग्रं मूषिकः

कश्चित् प्रत्यहं छिनत्ति। स सिंहः केसराग्रं लूनं बुद्ध्वा कुपितो विवरान्तर्गतं मूषिकमलभमानोऽचिन्तयत्—किं विधेयमत्र? भवत्वेवं श्रूयते—

क्षुद्रशत्रुर्भवेद् यस्तु विक्रमान्नैव लभ्यते।
तमाहर्तुं पुरस्कार्यः सदृशस्तस्य सैनिकः॥

इत्यालोच्य तेन ग्रामं गत्वा दधिकर्णनामा बिडालः मांसाद्याहारेण सन्तोष्य प्रयत्नादानीय स्वकन्दरे स्थापितः। ततस्तद्भयान्मूषिकोऽपि बहिर्न निःसरति। तेनासौ सिंहोऽक्षतकेसरः सुखं स्वपिति। मूषिकशब्दं यदा यदा शृणोति तदा तदा तं बिडालं मांसाहारदानेन सविशेषं संवर्धयति।

अथैकदा स मूषिकः क्षुधापीडितो बहिः सञ्चरंस्तेन मार्जारेण प्राप्तो व्यापादितः खादितश्च। अनन्तरं स सिंहो यदा कदाचिदपि मूषिकशब्दं न शुश्राव, तदोपयोगाभावात् तस्य बिडालस्याहारदाने मन्दादरो बभूव।

निरपेक्षो न कर्तव्यो भृत्यैः स्वामी कदाचन।
निरपेक्षं प्रभुं कृत्वा भृत्यः स्याद् दधिकर्णवत्॥

---

## कूर्महंसद्वयकथा

अस्ति मगधदेशे फुल्लोत्पलाभिधानं सरः। तत्र चिरात् संकटविकटनामानौ हंसौ निवसतः। तयोर्मित्रं कम्बुग्रीवनामा कूर्मश्च प्रतिवसति।

अथैकदा धीवरैरागत्य तत्रोक्तम्—अत्रास्माभिरद्योषित्वा प्रातर्मत्स्यकूर्मादयो व्यापादयितव्याः। तदाकर्ण्य कूर्मो हंसावाह—सुहृदौ! श्रुतोऽयं धीवरालापः? अधुना किं मया कर्तव्यम्?

हंसावाहतुः—ज्ञायतां पुनस्तावत्, पश्चात् यदुचितं तत् कर्तव्यम्। कूर्मो ब्रूते—मैवम्; यतो दृष्टव्यतिकरोऽहमत्र। तथा चोक्तम्—

अनागतविधाता च प्रत्युत्पन्नमतिस्तथा।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति॥

तावाहतुः—कथमेतत्? कूर्मः कथयति—

पुरैतस्मिन्नेव सरसि एवंविधेष्वेव धीवरेषु उपस्थितेषु मत्स्यत्रयेणालोचितम्। तत्र अनागतविधाता नामैको मत्स्यः। तेनोक्तम्—अहं तावज्जलाशयान्तरं गच्छामि। इत्युक्त्वा स ह्रदान्तरं गतः।

अपरेण प्रत्युत्पन्नमतिनाम्ना मत्स्येनाभिहितम्—भविष्यदर्थे प्रमाणाभावात् कुत्र मया गन्तव्यम्? तदुत्पन्ने काले यथाकार्यमनुष्ठेयम्।

ततो यद्भविष्येणोक्तम्—

यदभावि न तद् भावि भावि चेन्न तदन्यथा।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते॥

ततः प्रातर्जालेन बद्धः प्रत्युत्पन्नमतिः मृतवदात्मानं सन्दर्श्य स्थितः। ततो जालादपसारितः स्थलादुत्प्लुत्य गभीरं नीरं प्रविष्टः। यद्भविष्यश्च धीवरैः प्राप्तो व्यापादितश्च।

अतोऽहं ब्रवीमि—अनागतविधातेत्यादि। तद् यथाहमन्यं ह्रदं प्राप्नोमि तदद्य विधीयताम्।

हंसावाहतुः—जलाशयान्तरे प्राप्ते तव कुशलम्। स्थले गच्छतस्ते को विधिः?

कूर्मो ब्रूते—यथाहं भवद्भ्यां सहाकाशवर्त्मना यामि स उपायो विधीयताम्। हंसौ ब्रूतः—कथमुपायः सम्भवति? कच्छपो वदति—युवाभ्यां चञ्चुधृतं काष्ठखण्डमेकं मया मुखेनावलम्बितव्यम्। अतो भवतोः पक्षबलेन मयापि सुखेन गन्तव्यम्।

हंसौ ब्रूतः—सम्भवत्येष उपायः। किन्तु आवाभ्यां नीयमानं त्वां दृष्ट्वा लोकैः किञ्चिद् वक्तव्यमेव। तदाकर्ण्य यदि त्वमुत्तरं ददासि, तदा ते मरणं भविष्यति। तत् सर्वथा स्थीयताम्।

कूर्मो वदति—तत् किमहमज्ञः? नाहमुत्तरं दास्यामि।

तत एवमनुष्ठिते सत्याकाशे नीयमानं तं कूर्ममालोक्य सर्वे गोरक्षकाः पश्चाद् धावन्ति वदन्ति च—अहो! महदाश्चर्यम्। पक्षिभ्यां कूर्मः समुह्यते। तत्र कश्चिदाह—यद्ययं कूर्मः पतति तदात्रैव पक्त्वा खादितव्यः। कोऽपि निगदति— गृहं नेतव्यः। कश्चिद् वदति— सरसः समीपे पक्त्वा भक्षितव्यः।

तत् परुषवचनमाकर्ण्य क्रोधाद् विस्मृतसंस्कारः कूर्मोऽवदत्—युष्माभिर्भस्म भक्षितव्यम्। इति वदन्नेव काष्ठात् पतितः गोरक्षकैर्व्यापादितश्च।

सुहृदां हितकामानां यो वाक्यं नाभिनन्दति ।
स कूर्म इव दुर्बुद्धिः काष्ठाद् भ्रष्टो विनश्यति ।।

---

## काककृष्णसर्पराजपुत्रकथा

उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः ।
काक्या कनकसूत्रेण कृष्णसर्पो निपातितः ।।

कस्मिंश्चित्तरौ वायसदम्पती निवसतः । तयोश्चापत्यानि तरुकोटरावस्थितेन कृष्णसर्पेण खादितानि । ततः पुनर्गर्भवती वायसी वायसमाह—स्वामिन् ! त्यज्यतामयं तरुः । अत्र यावत् कृष्णसर्पस्तावदावयोः सन्ततिः कदाचिदपि न जीविष्यति । यतः

दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तरदायकः ।
ससर्पे च गृहे वासो मृत्युरेव न संशयः ।।

वायसो ब्रूते—प्रिये ! न भेतव्यम् । वारं वारं मयैतस्य महापराधः सोढः, इदानीं पुनर्न क्षन्तव्यः । वायस्याह—कथमनेन बलवता कृष्णसर्पेण सार्धं भवान् विग्रहीतुं समर्थः स्यात् ? वायसो ब्रूते—अलमनया चिन्तया । यतः

बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम् ।
पश्य सिंहो मदोन्मत्तः शशकेन निपातितः ।।

वायस्याह—कथमेतत् ? वायसः कथयति—

अस्ति मन्दरनाम्नि पर्वते दुर्दान्तो नाम सिंहः । स च

सर्वदा पशूनां वधं विदधान एवास्ते। ततः सर्वैः पशुभिर्मिलित्वा स सिंहो विज्ञप्तः—देव ! किमर्थं सर्वपशुवधः क्रियते ? यदि प्रसादो भवति ततो वयमेव भवदाहारार्थं प्रत्यहमेकैकं पशुमुपढौकयामः। सिंहेनोक्तम्—यद्येतदभिमतं भवतां तर्हि भवतु तत्। ततः प्रभृति प्रत्यहमेकैकं पशुमुपकल्पितं भक्षयन्नास्ते।

अथ कदाचित् कस्यापि वृद्धशशकस्य वारः समायातः। ततः सोऽचिन्तयत्—

त्रासहेतोर्विनीतिस्तु क्रियते जीविताशया।
पञ्चत्वं चेद् गमिष्यामि किं सिंहानुनयेन मे॥

तन्मन्दं मन्दमुपगच्छामि। ततः सिंहोऽपि क्षुधापीडितः कोपात् तमुवाच—कुतस्त्वं विलम्बादागतोऽसि ?

शशकोऽब्रवीत्—देव ! नाहमपराद्धः। आगच्छन् पथि सिंहान्तरेण बलाद्धृतः। तस्याग्रे पुनरागमनाय शपथं कृत्वा स्वामिनं निवेदयितुमत्रागतोऽस्मि। सिंहः सकोपमाह—सत्वरं गत्वा दर्शय मे क्वासौ दुरात्मा तिष्ठति।

ततः शशकस्तं गृहीत्वा गभीरकूपसमीपं गतः। अत्रागत्य स्वयमेव पश्यतु स्वामीत्युक्त्वा तस्मिन् कूपजले तस्यैव सिंहस्य प्रतिबिम्बं दर्शितवान्। ततोऽसौ क्रोधाध्मातो दर्पात्तस्योपर्यात्मानं निक्षिप्य पञ्चत्वं गतः।

अतोऽहं ब्रवीमि—बुद्धिर्यस्येत्यादि।

वायस्याह—श्रुतं मया। सम्प्रति यथाकर्तव्यं ब्रूहि। वायसोऽवदत्—प्रिये ! अत्रासन्ने सरसि राजपुत्रः प्रत्यहमागत्य

स्नाति। स्नानसमये तदङ्गावतारितं तीर्थशिलानिहितं कनकसूत्रं चञ्च्वा धृत्वानीय अस्मिन् कोटरे धारयिष्यसि।

अथ कदाचित् कनकसूत्रं दृषदि संस्थाप्य स्नातुं जलं प्रविष्टे राजपुत्रे वायस्या तदनुष्ठितम्। अथ कनकसूत्रानुसरणप्रवृत्तै राजपुरुषैस्तत्र तरुकोटरे निरूप्यमाणः कृष्णसर्पो व्यापादितः।

---

## मृगकाकशृगालकथा

अस्ति मगधदेशे चम्पकवती नामारण्यानी। तस्यां चिरान्महता स्नेहेन मृगकाकौ निवसतः। स च मृगः स्वेच्छया भ्राम्यन् हृष्टपुष्टाङ्गः केनचिच्छृगालेनावलोकितः। तं दृष्ट्वा शृगालोऽचिन्तयत्––आः! कथमेतन्मांसं सुललितं भक्षयामि? भवतु, विश्वासं तावदुत्पादयामि; इत्यालोच्य उपसृत्याब्रवीत्! कुशलं ते? मृगेणोक्तम्––कस्त्वम्?

जम्बूको ब्रूते––क्षुद्रबुद्धिनामा जम्बूकोऽहम्; अत्रारण्ये बन्धुहीनो मृतवदेकाकी निवसामि। इदानीं च त्वां मित्रमासाद्य पुनः सबन्धुर्जीवलोकं प्रविष्टोऽस्मि। अधुना मया तवानुचरेण सर्वथा भवितव्यमिति। मृगेणोक्तम्––एवमस्तु।

ततस्तावदस्तं गते सवितरि भगवति मरीचिमालिनि तौ मृगस्य वासभूमिं गतौ। तत्र चम्पकवृक्षशाखायां सुबुद्धिनामा काको मृगस्य चिरमित्रं निवसति। तौ दृष्ट्वा काकोऽवदत्––सखे

मृग ! कोऽयं द्वितीयः ? मृगो ब्रूते—जम्बूकोऽयमस्मत्सख्यमिच्छन्नागतः ।

काको ब्रूते—मित्र ! अकस्मादागन्तुना सह मैत्री न युक्ता । तन्न भद्रमाचरितम् । तथा चोक्तम्—

अज्ञातकुलशीलस्य वासो देयो न कस्यचित् ।
मार्जारस्य हि दोषेण हतो गृध्रो जरद्गवः ।।

तावाहतुः—कथमेतत् ? काकः कथयति—

अस्ति भागीरथीतीरे गृध्रकूटनाम्नि पर्वते महान् पर्कटीवृक्षः । तस्य कोटरे दैवदुर्विपाकाद् गलितनखनयनो जरद्गवो नाम गृध्रः प्रतिवसति । अथ कृपया तज्जीवनाय तद्वृक्षवासिनः पक्षिणः स्वाहारात् किञ्चित् किञ्चिदुद्धृत्य ददति तेनासौ जीवति शावकरक्षां च करोति ।

अथ कदाचित् दीर्घकर्णनामा मार्जारः पक्षिशावकान् भक्षितुं तत्रागतः । ततस्तमायान्तं दृष्ट्वा पक्षिशावकैर्भयार्तैः कोलाहलः कृतः । तत् श्रुत्वा जरद्गवेनोक्तम्—कोऽयमायाति ? दीर्घकर्णो गृध्रमवलोक्य सभयमाह—हा हतोऽस्मि ! अथवा

तावद् भयस्य भेतव्यं यावद्भयमनागतम् ।
आगतं तु भयं वीक्ष्य प्रतिकुर्याद् यथोचितम् ।।

अधुनातिसन्निधाने पलायनमप्यशक्यम् । तद् यथाप्राप्तं भवतु, विश्वासमुत्पाद्यास्य समीपमुपगच्छामि ; इत्यालोच्योपसृत्याब्रवीत्—आर्य ! त्वामभिवन्दे ।

गृध्रो ऽवदत्—कस्त्वम् ? सोऽवदत्—मार्जारोऽहम् । गृध्रो ब्रूते—दूरमपसर, न चेद्धन्तव्योऽसि मया । मार्जारोऽवदत्—

श्रूयतां तावन्मम वचनम् । ततो यद्यहं वध्यस्तदा हन्तव्यः । यतः

जातिमात्रेण किं कश्चिद्धन्यते पूज्यते क्वचित् ।
व्यवहारं परिज्ञाय वध्यः पूज्योऽथवा भवेत् ।।

गृध्रो ब्रूते—ब्रूहि किमर्थमागतोऽसि ? सोऽवदत्—अहमत्र गङ्गातीरे नित्यस्नायी निरामिषाशी ब्रह्मचर्येण चान्द्रायणव्रतमाचरंस्तिष्ठामि । यूयं धर्मज्ञानरताः प्रेमविश्वासभूमय इति पक्षिणः सर्वे सर्वदा ममाग्रे प्रस्तुवन्ति । अतो भवद्भ्यो विद्यावयोवृद्धेभ्यो धर्मं श्रोतुमिहागतः । भवन्तश्चैतादृशा धर्मज्ञा यन्मामतिथिं हन्तुमुद्यताः ! गृहस्थधर्मश्चैषः—

अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
छेत्तुः पार्श्वगतां छायां नोपसंहरति द्रुमः ।।

किञ्च यद्यन्नं नास्ति तदा सुप्रीतेनापि वचसा तावदतिथिः पूज्यः ।

तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ।।

गृध्रोऽवदत्—मार्जारा हि मांसरुचयो भवन्ति पक्षिशावकाश्चात्र निवसन्ति । तेनैवं ब्रवीमि । मार्जारोप्येवं श्रुत्वा भूमिं स्पृष्ट्वा कर्णौ स्पृशति ब्रूते च—मया धर्मशास्त्रं श्रुत्वा वीतरागेणेदं दुष्करं व्रतं चान्द्रायणमध्यवसितम्, यतः परस्परं विवदमानानामपि प्रमाणशास्त्राणामहिंसा परमो धर्म इत्यत्रैकमत्यम् ।

सर्वहिंसानिवृत्ता ये नराः सर्वसहाश्च ये ।
सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ।।

एवं विश्वास्य स मार्जारस्तरुकोटरे स्थितः । ततो दिनेषु

गच्छत्सु पक्षिशावकानाक्रम्य कोटरमानीय प्रत्यहं खादति। अथ येषामपत्यानि खादितानि, तैः शोकार्तैर्विलपद्भिरितस्ततो जिज्ञासा समारब्धा। तत् परिज्ञाय मार्जारः कोटरान्निःसृत्य बहिः पलायितः। पश्चात् पतत्त्रिभिरितस्ततो निरूपयद्भिस्तत्र तरुकोटरे शावकास्थीनि प्राप्तानि। अनन्तरं चानेनैव जरद्गवेनास्माकं शावकाः खादिता इति निश्चित्य मिलित्वा तैः पक्षिभिः स गृध्रो व्यापादितः।

अतोऽहं ब्रवीमि—अज्ञातकुलशीलस्य इत्यादि।

इत्याकर्ण्य स जम्बूकः सकोपमाह—मृगस्य प्रथमदर्शनदिने भवानप्यज्ञातकुलशील एवासीत्। तत् कथं भवता सहैतस्य स्नेहानुवृत्तिरुत्तरोत्तरं वर्धते ?

अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम्॥

यथा चायं मृगो मम बन्धुस्तथा भवानपि। मृगोऽब्रवीत्—किमनेनोत्तरेण ? सकलैरत्र विश्रम्भालापैः सुखमनुभवद्भिः स्थीयताम्। काकेनोक्तम्—एवमस्तु।

अथ प्रातः सर्वे यथाभिमतदेशं गताः। एकदा निभृतं शृगालो ब्रूते—सखे मृग ! एतस्मिन्नेव वनैकदेशे शस्यपूर्णं क्षेत्रमस्ति। तदहं त्वां नीत्वा दर्शयामि। तथा कृते सति मृगः प्रत्यहं तत्र गत्वा शस्यं खादति। ततो दिनकतिपयेन क्षेत्रपतिना तद् दृष्ट्वा पाशास्तत्र योजिताः। अनन्तरं पुनरागतो मृगस्तत्र चरन् पाशैर्बद्धोऽचिन्तयत्—को मामितः कालपाशादिव व्याधपाशात् त्रातुं मित्रादन्यः समर्थः ?

अनन्तरं स जम्बूकस्तत्रागत्याचिन्तयत्—फलितस्तावदस्माकं कपट: प्रबन्ध:। मनोरथसिद्धिरपि बाहुल्यान्मे भविष्यति। यत एतस्योत्कृत्यमानस्य मांसासृगनुलिप्तानि अस्थीनि मयावश्यं प्राप्तव्यानि। स च मृगस्तं दृष्ट्वोल्लसितो ब्रूते—सखे, छिन्धि तावन्मम बन्धनम्। सत्वरं त्रायस्व माम्। यत:

उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धव:॥

जम्बूक: पाशं मुहुर्मुहुर्विलोक्याचिन्तयत्—दृढबन्धनबद्धोऽस्ति तावदयं मृग:। ब्रूते च—सखे! स्नायुर्निर्मिता एते पाशा:, तदद्य भट्टारकवारे कथमेतान् दन्तै: स्पृशामि? मित्र! नान्यथा मन्तव्यम्। प्रभाते यत् त्वया वक्तव्यं तत् कर्तव्यमिति।

अनन्तरं स काक: प्रदोषकाले मृगमनागतमवलोक्य इतस्ततोऽन्विष्यंस्तथाविधं दृष्ट्वोवाच—सखे! किमेतत्? मृगेणोक्तम्—अवधीरितसुहृद्वाक्यस्य फलमेतत्। काको ब्रूते—स वञ्चक: क्वास्ते? मृगेणोक्तम्—मन्मांसार्थी तिष्ठत्यत्रैव। काको ब्रूते—मित्र! उक्तमेव मया पूर्वम्। तत: काको दीर्घं नि:श्वस्याह—अरे वञ्चक! किं त्वया पापकर्मणा कृतम्!

उपकारिणि विश्रब्धे शुद्धमतौ य: समाचरति पापम्।
तं जनमसत्यसन्धं भगवति वसुधे! कथं वहसि॥

अथ प्रभाते क्षेत्रपतिर्लगुडहस्तस्तं प्रदेशमागच्छन् काकेनावलोकित:। तमालोक्य काकेनोक्तम्—सखे मृग! त्वमात्मानं मृतवत् सन्दर्श्य वातेनोदरं पूरयित्वा पादान् स्तब्धीकृत्य तिष्ठ।

यदाहं शब्दं करोमि तदा त्वं सत्त्वरमुत्थाय पलायिष्यसे। मृगस्तथैव काकवचनेन स्थितः।

ततः क्षेत्रपतिना हर्षोत्फुल्ललोचनेन तथाविधो मृग आलोकितः। आलोक्य चासौ—आः! स्वयं मृतोऽसि इत्युक्त्वा मृगं बन्धनान्मोचयित्वा पाशान् संवरितुं कृतयत्नो बभूव। ततः कियद्दूरेऽन्तरिते क्षेत्रपतौ स मृगः काकस्य शब्दं श्रुत्वा ससम्भ्रमः समुत्थाय पलायितः। तमुद्दिश्य तेन क्षेत्रपतिना प्रकोपात् क्षिप्तेन लगुडेन शृगालो व्यापादितः।

---

## वीरवरोपाख्यानम्

अस्ति शोभावती नाम सार्थकनाम्नी काचन नगरी। तत्र शूद्रको नाम महापराक्रमो नानाशास्त्रवित् पूतचरित्रः कोऽपि महीपतिः प्रतिवसति स्म।

अथैकदा वीरवरनामा राजपुत्रः कस्मादपि देशाद् राजद्वारमुपागमत्। तेन सह वेदरता नाम तस्य पत्नी शक्तिधरो नाम सुतो वीरवती नाम कन्या च समायाताः।

अथासौ प्रतीहारमवदत्—वृत्त्यर्थमागतो राजपुत्रोऽस्मि। तन्नय मां स्वामिनः समीपम्। ततो दौवारिको निनाय तं प्रभोः समीपम्। तत्र प्रणामपुरःसरमसौ सविनयं भूपतिमुवाच—यदि सेवकेन मया प्रयोजनं देवस्य तदा निर्दिशतु मद्वर्तनं स्वामी।

राजा प्रोवाच—का ते वृत्तिः ?

वीरवर उवाच—प्रतिदिनं सुवर्णशतचतुष्टयं देव !

राजा—का ते सामग्री ?

वीरवरः—इमौ बाहू एष खड्गश्च ।

राजा—नैतच्छक्यम् ।

ततः स राजपुत्रः पुनः प्रणम्य भूपतिमामन्त्रयत । तदालोक्य मन्त्रिणोऽवदन्—दिनचतुष्टयस्य वेतनार्पणेन प्रथममवगम्यतां देव स्वरूपमस्य वर्तनार्थिनो राजपुत्रस्य किमुपपन्नमेतद् वेतनं न वेति । कीदृशी गुणवत्ता चास्य लोकोत्तरा तन्निर्णीयतां च स्वामिन् !

अथ मन्त्रिणां वचनात् ताम्बूलदानेन नियोजितोऽसौ राजपुत्रो वीरवरो नरपतिना । वर्तनविनियोगश्चास्य सुनिभृतं निरूपितो नरनाथेन ।

स च राजपुत्रः प्रतिदिनं प्रभाते राजदर्शनादनन्तरं स्ववेतनलब्धस्यार्थस्य यच्छति देवेभ्यो ब्राह्मणेभ्यश्चार्धम् । स्थितस्यार्धं दरिद्रेभ्यो ददाति निक्षिपति च तदवशिष्टं भोज्यविलासव्ययार्थं पत्न्या हस्ते । ततो धृतायुधो राजद्वारमहर्निशं सेवते । यदा च राजा स्वयमादिशति तदा याति स्वगृहम् ।

अथैकदा कृष्णचतुर्दश्यामर्धरात्रे स राजा शुश्राव करुणरोदनध्वनिमेकम् । ततोऽसौ पप्रच्छ—कोऽत्र द्वारि तिष्ठति ? वीरवरोऽवदत्—सेवको वीरवरोऽत्र द्वारि वर्तते देव !

राजा—क्रन्दनमनुसर राजपुत्र !

वीरवरः—यथादिशति देवः ।

ततोऽसौ तद्रोदनस्वरानुसरणक्रमेण प्रचलितः । दयार्द्रचित्तो

भूपतिरपि व्यचिन्तयत्—नैष गन्तुमर्हति राजपुत्र एकाकी सूचिभेद्ये तिमिरेऽस्मिन् । तदहमपि गच्छामि पृष्ठतोऽस्य निरूपयामि च किमेतदिति । ततो नरपतिः खड्गपाणिस्तस्यानुसरणक्रमेण बहिर्निरगच्छत् नगरीद्वारात् ।

अथ गच्छता राजपुत्रेण बहिर्नगरादारादालोकिता रोदनपरा कापि सुन्दरी दिव्याभरणभूषिता पृष्टा च तेन—का त्वमम्ब किमर्थं विलपसि ?

नारी प्रत्युवाच—वत्स, अहमेतस्य भूपालस्य शूद्रकस्य राजलक्ष्मीरस्मि । चिरमेतस्य भुजच्छायायां सुमहता सुखेन निवसामि । साम्प्रतं तु देव्या अपराधेन अद्य प्रभृति तृतीये दिवसे राजा पञ्चत्वं यास्यति । तदाहमनाथा भविष्यामि । तदिदानीं नात्र स्थास्यामीति क्रन्दामि ।

तदाकर्ण्य बद्धाञ्जलिर्वीरवरोऽवदत्—भगवति ! अस्त्यत्र काचित् प्रवृत्तिर्यया भगवत्याः पुनरिह चिरावासो भवति, सुचिरं जीवति च स्वामी ?

राजलक्ष्मीरवदत्—अस्ति वत्स ! एकैवात्र प्रवृत्तिः । सा चातीव दुःसाध्या ।

साष्टाङ्गं प्रणिपत्य वीरवर आह—अम्ब ! कथय यदि नैकान्ततोऽसाध्या सा प्रवृत्तिर्मानुषस्य ।

राजलक्ष्मीरुवाच—यदि त्वया स्वतनुजस्य शक्तिधरस्य शिरः स्वहस्तेन छित्त्वा सहासवदनेन भगवत्याः सर्वमङ्गलाया उपहारः क्रियेत तदा पुनर्जीविष्यति राजा शूद्रको वर्षाणां शतम् । अहं च सुखं निवत्स्यामि ।

ततः सा तत्क्षणादेव गतादृश्यतां तत्सम्मुखम् ।

अथ राजपुत्रो वीरवरो गत्वा स्वावासं निद्रालसां पत्नीं पुत्रं दुहितरं च प्राबोधयत् । ततस्ते यावत् त्यक्तसुप्तय उपविष्टास्तावत्तेन विवृतोऽखिलराजक्ष्मीसंवादः ।

ततः शक्तिधरः सानन्दमाह धन्योऽहमीदृशः स्वामि-जीवितरक्षार्थं यस्योपयोगः । तत् कोऽधुना विलम्बस्तात ? एवंविधे कर्मणि विनियोग एतस्य देहस्य परमश्लाघ्यः । यतः

धनानि जीवितञ्चैव परार्थे प्राज्ञ उत्सृजेत् ।
सन्निमित्तो वरं त्यागो विनाशे नियते सति ।

ततः शक्तिधरस्य जननी ब्रवीति—यद्येवमस्मत्कुलोचितं नाचरितव्यं, तदा गृहीतराजवर्तनस्य किमिति निस्तारो भवति ?

कन्या वीरवती चावदत्—धन्याहं यस्या ईदृशो जनको भ्राता च । तत् कथं विलम्ब्यते ? एष एव गृहीतस्वामि-वर्तनस्य निस्तारोपायः ।

ततस्ते सर्वे सर्वमङ्गलाया आयतनमगमन् ।

अथ तत्र गतो देव्याः पूजानन्तरं वीरवरोऽवदत्—भगवति ! प्रसीद । विजयतां महाराजः शूद्रकः । गृह्यतामेष मद्दत्त उपहारः । ततोऽसौ स्वहस्तेन चकर्त मस्तकं स्वपुत्रस्य ।

अथ वीरवरोऽचिन्तयत्—कृतो गृहीतस्वामिवर्तनस्य निस्तारो मया स्वपुत्रोत्सर्गेण । अधुना पुत्रहीनस्य मे जीवनं विडम्बनमेव । तत् सर्वथा कृन्तामि स्वमस्तकमपि । इति तेन पातितं स्वशिरः स्वकरस्थखड्गेन । ततस्तस्य पत्न्या दुहित्रा च तदेवाचरितम् ।

राजा शूद्रकोऽपि तददृश्य एवालोकयत् तेषां सर्वेषां सर्वमेतदाचरितम्। ततोऽसौ व्यचिन्तयत्—

जायन्ते च म्रियन्ते च मादृशाः क्षुद्रजन्तवः।
अनेन सदृशो लोके न भूतो न भविष्यति॥

तदेतत्परित्यक्तेन मम राज्येनापि किं प्रयोजनम्? ततस्तेन स्वशिरश्छेदनार्थमुत्क्षिप्तः खड्गो भूपतिना।

अथासौ भगवत्या सर्वमङ्गलया प्रत्यक्षीभूतया राजा करे धृत्वा वारित उक्तश्च—वत्स! प्रसन्ना भवामि ते। अलं साहसेन। नेदानीं राज्यभङ्गस्ते भविष्यति।

देवीं साष्टाङ्गं प्रणिपत्य राजावदत्—भगवति! न मे प्रयोजनं राज्येन जीवितेन वा। यदि मयि कृपा भगवत्या जाता तदा ममायुःशेषेणापि जीवतु राजपुत्रो वीरवरः सह पुत्रेण पत्न्या दुहित्रा च। अन्यथा मया यथाप्राप्ता गतिर्गन्तव्या जगदम्बे।

भगवत्यवदत्—वत्स! अनेन ते सत्त्वोत्कर्षेण भृत्यवात्सल्येन च परं प्रीतास्मि। तद् गच्छ विजयी भव। अयमपि सपरिवारो जीवतु राजपुत्र आदर्शचरितो वीरवरः। तत्क्षणादेव देवी गतादर्शनम्। ततो वीरवरः सपरिवारो लब्धजीवितः स्वगृहं गतः। नृपतिरपि सर्वेषामदृश्य एव स्वप्रासादं प्राविशत्।

अथ वीरवरो द्वारस्थः पुनर्भूपालेन पृष्ट उवाच—देव! सा रोदनपरा योषा मद्दर्शनाददृश्या बभूव। न हि कापि वार्तान्या स्वामिन्! ततः परमां प्रीतिं गतो महीपतिस्तस्मै प्रायच्छत् समग्रं कर्णाटप्रदेशं राजपुत्राय वीरवराय।

---

## शिबिजातकम्

बोधिसत्त्वभूतः किलायं भगवान् कदाचिच्छिबीनां राजा वभूव। स बाल्यात् प्रभृत्येव वृद्धोपासनरतिर्विनयानुरक्तोऽनुरक्तप्रकृतिः प्रकृतिमेधावित्वाद् अनेकविद्याधिगमविपुलतरमतिः स्वा इव प्रजाः प्रजाः पालयति स्म।

अथ स राजा दानप्रियत्वात् समन्ततो नगरस्य सर्वोपकरणधनधान्यसमृद्धा दानशालाः कारयित्वा स्वमाहात्म्यानुरूपं दानवर्षं कृतयुगमेघ इव ववर्ष। अन्नमन्नार्थिभ्यः पानं पानार्थिभ्यः वसनभोजनरजतसुवर्णादिकं तत्तदर्थिभ्यः। अथ तस्य राज्ञः प्रदानौदार्यश्रवणाद् विस्मितप्रमुदितहृदया नानादिग्देशनिवासिनः पुरुषास्तं देशमुपजग्मुः।

अथ तस्य राज्ञः पर्षदि निषण्णस्यामात्यगणपरिवृतस्य शक्रो देवानामिन्द्रो वृद्धमन्धं ब्राह्मणरूपमभिनिर्माय राज्ञश्चक्षुःपथे प्रादुरभवत्। अथ तस्य राज्ञो धीरप्रसन्नसौम्यया प्रत्युद्गत इव परिष्वक्त इव च दृष्ट्या केनार्थ इत्युपनिमन्त्र्यमाणः क्षितिपानुचरैर्नृपतिसमीपमुपेत्य जयाशीर्वचनपुरःसरं राजानमित्युवाच—

दूरादपश्यन् स्थविरोऽभ्युपेतस्त्वच्चक्षुषोऽर्थी क्षितिपप्रधान।
एकेक्षणेनापि हि पङ्कजाक्ष गम्येत लोकाधिप लोकयात्रा॥

अथ स राजा प्रमोदविशदाक्षरमेनमुवाच—

येनाभ्युपेतोऽसि मनोरथेन तमेव ते ब्राह्मण पूरयामि ।
आकाङ्क्षमाणाय मदेकमक्षि ददामि चक्षुर्द्वयमप्यहं ते ।।

अथ स राजा नीलोत्पलदलशकलरुचिरकान्ति नयनमेकं वैद्यपरिदृष्टेन विधिना शनकैरक्षतमुत्पाट्य परया प्रीत्या चक्षुर्याचनकाय प्रायच्छत् । अथोन्मिषितैकचक्षुषं चक्षुर्याचनकमभिवीक्ष्य स राजा परमेण प्रहर्षेण समापूर्यमाणहृदयो द्वितीयमप्यस्मै नयनं प्रायच्छत् ।

ततः स राजा नयने प्रदाय विपद्मपद्माकरतुल्यवक्त्रः ।
पौरैरसाधारणतुष्टिरासीत् समग्रचक्षुर्ददृशे द्विजश्च ।।

अथ शक्रस्य विस्मयावर्जितहृदयस्यैतदभवन्मनसि—नायमाश्चर्यसत्त्वश्चिरमिमं परिक्लेशमनुभवितुमर्हति । अथ तस्य राज्ञः क्रमात् संरूढनयनव्रणस्य प्रतनूभूतान्तःपुरपौरजानपदशोकस्य उद्यानपुष्करिण्यास्तीरे मृदुसुरभिशिशिरसुखपवने मधुकरगणोपकूजिते पर्यङ्केण निषण्णस्य शक्रो देवेन्द्रः पुरस्तात् प्रादुरभवत् । क एष इति च राज्ञा पर्यनुयुक्तोऽब्रवीत्—

शक्रोऽहमस्मि देवेन्द्रस्त्वत्समीपमुपागतः ।

राजोवाच—स्वागतम् । आज्ञाप्यतां केनार्थ इति । स उवाच—

वरं वृणीष्व राजर्षे यदिच्छसि तदुच्यताम् ।

राजोवाच—देवेन्द्र ! श्रूयताम्—

तदैव चैतर्हि च याचकानां
वचांसि याच्ञानियताक्षराणि ।

आशीर्मयाणीव मम प्रियाणि
यथा तथोदेतु ममैकमक्षि ।।

अथ तस्य राज्ञः सत्याधिष्ठानबलात् पुण्योपचयविशेषाच्च वचनसमनन्तरमेव नीलोत्पलदलसदृशमेकं चक्षुः प्रादुरभवत्। प्रादुर्भूते च तस्मिन् नयनाश्चर्ये प्रमुदितमनाः स राजा पुनरपि शक्रमुवाच—

यश्चापि मां चक्षुरयाचतैकं
तस्मै मुदा द्वे नयने प्रदाय ।
प्रीत्युत्सवैकाग्रमतिर्यथासं
द्वितीयमप्यक्षि तथा ममास्तु ।।

अथाभिव्याहारसमनन्तरमेव तस्य राज्ञो विस्पर्धमानमिव तेन नयनेन द्वितीयं चक्षुः प्रादुरभवत् ।

अथ शक्रः साधु साध्वित्येनमभिसंराध्य तत्रैवान्तर्दधे । अथ बोधिसत्त्वो विस्मयपूर्णमनोभिरमात्यैरनुयातः पौरैश्चाभिवीक्ष्यमाणो जयाशीर्वचनपुरःसरैश्च ब्राह्मणैरभिनन्द्यमानः पर्षदि निषण्णो धर्मं देशयामास—

को नाम लोके शिथिलादरः स्यात्
कर्तुं धनेनार्थिजनप्रियाणि ।
दिव्यप्रभावे नयने ममेमे
प्रदानपुण्योपनते समीक्ष्य ।।

---

# प्रबन्धकोषः

## वङ्कचूलप्रबन्धः

अत्रैव भारते वर्षे विमलयशा नाम भूपतिरभूत्। तस्य सुमङ्गलदेव्या सह विषयसुखमनुभवतः क्रमात् जातमपत्ययुगलम्। तत्र पुत्रः पुष्पचूलः पुत्री पुष्पचूला। अनर्थसार्थमुत्पादयतः पुष्पचूलस्य कृतं लोकैर्वङ्कचूल इति नाम। महाजनोपालब्धेन राज्ञा रुषितेन निःसारितो नगराद् वङ्कचूलः। गच्छंश्च पथि पतितो भीषणायामटव्यां सह निजपरिजनेन स्वस्रा च स्नेह-परवशया। तत्र च क्षुत्पिपासार्दितो दृष्टो भिल्लैः। नीतः स्वपल्ल्यां स्थापितश्च मृतपूर्वपल्लीपतिपदे। पर्यपालयद् राज्यम्। अलुण्ठयद् ग्रामनगरसार्थादीन्।

अन्यदा सुस्थिताचार्याः सिंहगुहां नाम पल्लीं प्रापुः। जातश्च वर्षाकालः। साधुभिः सहालोच्य मार्गयित्वा वङ्कचूलाद् वसतिं स्थितास्तत्रैव सूरयः। तेन च प्रथममेव व्यवस्था कृता—मम सीमान्तर्धर्मकथा न कथनीया। यतो युष्मत्कथायामहिंसादिको धर्मः। न चैवं मम लोको निर्वहति। एवमस्तु इति प्रतिपद्य तस्थुर्गुरवः।

वङ्कचूलेनाहूय सर्वे प्रधानपुरुषा भणिताः—अहं राजपुत्रः। तन्मत्समीपे ब्राह्मणादय आगमिष्यन्ति। भवद्भिर्जीववन्धो मांस-मद्यादिप्रसङ्गश्च पल्ल्या मध्ये न कर्तव्यः। एवं कृते यतीनामपि भक्तपानमजुगुप्सितं कल्पत इति।

तैस्तथैव कृतं यावच्चतुरो मासान् । प्राप्तो विहारसमयः । ततः सूरिभिः सह चलितो वङ्कचूलः । स्वसीमां प्रापुषा तेन विज्ञप्तम्—वयं परकीयसीमां न प्रविशाम इति । सूरिभिर्भणितम्—तत् किमप्युपदिशामस्तुभ्यम् । तेनोक्तम्—यन्मयि निर्वहति तदुपदेशेनानुगृह्यतामयं जनः ।

ततः सुरिभिस्त्रयो नियमा दत्ताः । तद् यथा—अज्ञातफलानि न भोक्तव्यानि । सप्ताष्टानि पदान्युपसृत्य घातो देयः । काकमांसं न भक्षणीयमिति । प्रतिपन्नास्तेन ते । गुरून् प्रणम्य स्वगृहमगमत् ।

कालक्रमेण तस्य तद्राज्यं शासतस्तत्रैव पल्ल्यां तस्यैवाचार्यस्य शिष्यौ धर्मर्षिधर्मदत्तनामानौ कदाचित् वर्षास्ववस्थितवन्तौ । वङ्कचूलस्तु तद्दत्तनियमानाम् आयतिशुभफलतामवलोक्य व्यजिज्ञपत्—हे भदन्तौ ! मदनुकम्पया कमपि पेशलं धर्मोपदेशं ददाताम् ।

ततस्ताभ्यां चैत्यविधापनदेशना पापनाशिनी विदधे । तेनापि शराविकापर्वतसमीपवर्तिन्यां तस्यामेव पल्ल्यां चर्मण्वतीसरित्तीरे कारितमुच्चैस्तरं चारुचैत्यम् । स्थापितं च तत्र श्रीमन्महावीरबिम्बम् । तीर्थंतया च रूढं तत् । तत्रायान्ति स्म चतुर्दिग्भ्यः सङ्घाः ।

सा च सिंहगुहा पल्ली कालक्रमात् ढिम्पुरीत्याख्यया प्रसिद्धा नगरी सञ्जाता । अद्यापि स भगवान् श्रीवीरः सकलसङ्घेन तस्यामेव पुर्यां यात्रोत्सवैराराध्यते ।

---

## द्वात्रिंशत्पुत्तलिका

### कृतज्ञतापरीक्षणम्

देवदत्तो नाम ब्राह्मणकुमार एकदा होमसमिदाहरणार्थं महारण्यं प्रविष्टो यावत् समिधश्छिनत्ति तावद् विक्रमार्को राजा मृगयार्थं वनं गतः शूकरमनुधावन् महारण्यं प्रविष्टः पुरो मार्गमजानन् देवदत्तं दृष्ट्वा नगरमार्गमपृच्छत् । तेन पृष्टो देवदत्तः स्वयमग्रे गच्छन् राजानं नगरमानयत् । ततो राजा देवदत्तं बहुधा सम्मान्य कस्मिंश्चिद् व्यापारे नियुक्तवान् । तदनन्तरं कालो महान् गतः ।

एकदा राज्ञा भणितम्—कथमहं देवदत्तकृतोपकाराद् उत्तीर्णो भविष्यामि ? यदनेन महारण्यमध्याद् ग्राममानीतः ।

तद्राजवचनं श्रुत्वा देवदत्तेन स्वमनसि विचारितम्—अहो ! सत्पुरुषः अयं कृतमुपकारं न विस्मरति । भवतु तावत् राजा यद् वदति तत् सत्यं वा मिथ्या वा अस्य प्रत्ययो द्रष्टव्यः । इति विचिन्त्य राजकुमारं केनाप्यविदितं स्वमन्दिरे सङ्गोप्य तस्यालंकारं भृत्यहस्ते दत्त्वा नगरमध्ये विक्रयार्थं प्रेषितवान् ।

तस्मिन्नवसरे राजमन्दिरे राजपुत्रः केनापि चौरेणापहृतः इति महान् कोलाहलो जातः । राज्ञापि स्वपुत्रमार्गणाय सर्वेऽधिकारिणः प्रेषिताः । ततस्ते यावद् विपणिमध्ये विलोकयन्ति तावदाभरणहस्तो देवदत्तभृत्यो दृष्टः । ततस्तदाभरणं राजकुमारस्येति ज्ञात्वा तं बद्ध्वा राजसकाशं निन्युः । राजभृत्याः

कथयन्ति स्म—रे पापाचार! कथमेतदाभरण तव हस्ते समागतम्? तेनोक्तम्—मम हस्ते देवदत्तेन ब्राह्मणेन दत्तं तस्याहं भृत्य इति विपरिणमध्ये एतदाभरणविक्रयेण धनमानय इति कथितञ्च।

ततो राजा देवदत्त आकारितो भणितश्च—भो देवदत्त! एतदाभरणं तव हस्ते केन दत्तम्? देवदत्तेनोक्तम्—न केनापि दत्तम्, अहमेव धनलोलुपस्तव कुमारं हत्वा तदाभरणानि सर्वाणि गृहीत्वा तन्मध्ये इदमेकमाभरणमस्य हस्ते विक्रेतुं दत्तवान्। इदानीं तुभ्यं यत् रोचते तत् कुरु। मम कर्मवशादेवंविधा बुद्धिरभूदिति भणित्वा अधोमुखो बभूव। तद्वचनं श्रुत्वा राजा तूष्णीमवस्थितः। तदा सभामध्ये कैश्चिदुक्तम्—अहो! अयं सर्वधर्मशास्त्रवेत्तापि कथमीदृशे पापकर्मणि बुद्धिमकरोत्?

तत्र सभ्यैर्भणितम्—भो राजन्! अयं बालघाती पुनः स्वर्णस्तेयी च। अतः शूलेन हन्तव्यः। ततः अन्यैर्मन्त्रिभिरुक्तम्—अमुं शतखण्डं कृत्वा अस्य मांसेन गृध्राणां बलिर्दातव्य इति।

तेषां वचनं श्रुत्वा राज्ञा भणितम्—भोः सभ्याः। अयं ममाश्रितः पुरा मार्गदर्शनादुपकारी च। सत्पुरुषेण आश्रितानां गुणदोषचिन्ता न कार्या।

इत्युक्त्वा देवदत्तं प्रति भणति स्म—भो देवदत्त! त्वं चेतसि किमपि भयं मा कार्षीः। मम पुत्रो बलीयसा प्राक्तनेन कर्मणा मारितः, त्वया किं कृतम्? यतः प्राक्तनं कर्म कोऽपि लङ्घयितुं न शक्नोति। अन्यच्च महारण्ये पतितं मां नगरं

नीतवतो महोपकारिणस्तव प्रत्युपकारसहस्रैरप्युत्तीर्णो न भवामि इति समाश्वास्य वस्त्राभरणादिना देवदत्तं सम्भाव्य विससर्ज ।

ततो देवदत्तस्तं कुमारमानीय राज्ञे ददौ । ततः सविस्मयेन राज्ञा भणितम्—किमिदम् ! देवदत्तेन उक्तम्—कृतोपकारात् कथमप्युत्तीर्णो न भवामीति पूर्वं श्रीमतोक्तम् । तद् भवतः स्वभावपरीक्षणार्थं मया एवं कृतम् । राज्ञोक्तम्—यः कृतमुपकारं विस्मरति स पुरुषाधम एव । देवदत्तेनोक्तम्—भो राजन् ! कारणं विनापि सकलजगदुपकारी भवान् । अतस्त्वमेव सुजनो लोके ।

---

# वेतालपञ्चविंशतिः

## यज्ञसोमकथा

अथ वेतालः कथामपरां कथयति—

देव ! कलिङ्गविषये यज्ञस्थलनामधेयं नगरमासीत् । तत्र यज्ञसोमनामा ब्राह्मणस्तिष्ठति । तस्य ब्राह्मणी सोमदत्ता । तस्यामनेन ब्रह्मस्वामी नाम पुत्र उत्पादितः । स सर्वशास्त्रतत्त्वज्ञोऽपि दैववशात् पञ्चत्वमगमत् ।

ततस्तत्पितरौ बहुविधं विलपन्तौ बन्धुजनसहितौ तमादाय श्मशाने सत्कारार्थं जग्मतुः । इत्येव काले श्मशानवासी योगी

तं द्विजकुमारं सर्वशास्त्रवेत्तारं मनोहरमयुक्तकाले मृतमालोक्य करुणस्वरेणोच्चैः क्रन्दितवान् परमकौतुकेन नर्तितवांश्च। सहसोत्थाय योगेन जीर्णशरीरं परित्यज्य मृतस्य द्विजकुमारस्य शरीरं प्रविवेश। कुमारः सुप्तोत्थितो भूतः। तत्पितरौ परां प्रीतिमासादितवन्तौ। सर्वे बन्धुवर्गा हर्षिता बभूवुः। ब्रह्मस्वामी प्राप्तजीवनः सर्वभोगं परित्यज्य योगं ध्यायंस्तस्थौ।

श्मशानवासी योगी कथं चक्रन्द कथं वा ननर्त तत्कारणं वदतु देवः।

राजा वदति—श्रृणु रे वेताल ! चिरकालमुपार्जितं शरीरं त्यक्तव्यमिति चक्रन्द। जीर्णशरीरं विहाय सर्वगुणाधारं द्विजशरीरं प्राप्तव्यमिति कृत्वा ननर्त।

नृपताविति वादिनि वेतालः शिंशपावृक्षे पुनर्ललाग।

---

## द्विजभोजराजयोः संवादः

बुद्धिसागरं मुख्यामात्यं विधाय स्वराज्यं बुभुजे भोजभूपतिः। एवमतिक्रामति काले कदाचित् राज्ञा कोऽपि धारानगरवासी विप्रो लक्षितः। स च राजानं वीक्ष्य नेत्रे निमील्य गच्छन् राज्ञा पृष्टः—द्विज! त्वं मां दृष्ट्वा न स्वस्तीति जल्पसि। विशेषेण लोचने निमीलयसि। अत्र को हेतुरिति।

विप्र आह—देव! त्वं वैष्णवोऽसि। विप्राणां नोपद्रवं करिष्यसि। ततस्त्वत्तो न मे भीतिः। किन्तु कस्मैचित् किमपि न प्रयच्छसि। तेन तव दाक्षिण्यमपि नास्ति। अतस्ते किमाशीर्वचसा? किञ्च प्रातरेव कृपणमुखावलोकनात् लाभहानिः स्यादिति लोकोक्त्या लोचने निमीलिते।

राजापि तेन वाक्येन पीयूषपूरस्नात इव लोचनाभ्यां हर्षाश्रूणि मुमोच। प्राह च द्विजम्—विप्र! प्रत्यहं राजभवनमागन्तव्यम्। न ते कश्चित् निषेधः। विद्वांसः कवयश्च सभामानेतव्याः। कोऽपि विद्वान् न खलु दुःखभागी भवतु। एनमधिकारं पालय।

एवं गच्छत्सु दिवसकतिपयेषु राजा विद्वत्प्रियःदानवित्तेश्वर इति प्रथामगात्। ततो राजानं दिदृक्षवः कवयो नानादिग्भ्यः समागताः।

एवं वित्तादिव्ययं कुर्वाणं राजानं प्रति कदाचित्

मुख्यामात्येनेत्थमभ्यधायि—देव! राजानः कोशबलयुता एव विजयिनो नान्ये। राजा च तमाह—

दानोपभोगबन्ध्या या सुहृद्भिर्या न भुज्यते।
पुंसा समाहिता लक्ष्मीरलक्ष्मीः क्रमशो भवेत्॥

---

# पुरुषपरीक्षा

## हासविद्यकथा

अस्ति काञ्ची नाम काचिद् राजधानी। तस्यां सुप्रतापो नाम राजासीत्। तत्रैकदा कस्यापि धनिकस्य धनं चोरयन्तश्चत्वारश्चौराः सन्धिद्वारि प्रशास्तृपुरुषैः प्राप्ताः शृङ्खलेन बद्धा राज्ञे निवेदिताश्च। राजा च घातकपुरुषानादिदेश—रे रे घातकपुरुषाः। चतुरोऽपि चौरानेतान् नगराद् बहिर्नीत्वा शूलमारोप्य मारयत।

ततो राजाज्ञया घातकपुरुषैस्त्रयश्चौराः शूलमारोप्य हताः। चतुर्थेन चिन्तितम्—

प्रत्यासन्नेऽपि मरणे रक्षोपायो विधीयते।
उपाये सफले रक्षा भवत्येव न संशयः॥

अपि च—

व्याधिना पीड्यमानोऽपि मार्यमाणोऽपि भूभुजा।
प्रत्यायाति यमद्वारात् प्रतीकारपरो नरः॥

चौर उवाच—रे रे घातकपुरुषाः ! त्रयश्चौरा युष्माभिर्हता एव। इदानीं राजाग्रे मद्वचनं श्रावयित्वा मां मारयत। यतोऽहमेकां महतीं विद्यां जानामि मयि मृते साऽस्तं यास्यति। राजा तु तां गृहीत्वा मां मारयतु। तेन विद्या मर्त्यलोके तिष्ठेत्।

घातका ऊचुः—रे चौर पुरुषाधम ! वधस्थानमानीतोऽसि। किमतोऽपि जीवितुमिच्छसि ? कां विद्यां जानासि ? कथं वा तवाधमस्य विद्या भूपालेन ग्रहीतव्या ?

चौर उवाच—रे घातकाः ! किं ब्रूथ ? राजकार्यबाधां कर्तुमिच्छथ ? यदि राजा ज्ञास्यति तदावश्यं तेन ग्रहीतव्या महतीयं विद्या। किं च विद्यावार्ताकथकेभ्यो युष्मभ्यमपि प्रभुणा प्रसादः कर्तव्यः।

ततस्तस्य चौरस्य वचनैः स्वामिकार्यानुरोधेन घातकैः सा वार्ता राज्ञे निवेदिता। राजा च कौतुकमाकर्ण्य चौरमाहूय पप्रच्छ।

राजोवाच—रे ! कां विद्यां जानासि ? चौर उवाच—देव ! सुवर्णकृषिं जानामि ! राजोवाच—का परिपाटी ? चौर उवाच—देव ! सर्षपपरिमाणानि सुवर्णबीजानि कृत्वा भूमावुप्यन्ते, मासमात्रेण सर्षपसदृश एव कन्दल्यो भवन्ति। देवः प्रत्यक्षं पश्यतु।

राजोवाच—चौर ! सत्यमेतत् ? चौर उवाच—देवस्य पुरतः कस्यासत्यभाषणे शक्तिः ? यदि मम वचनं व्यभिचरति तदा मासान्ते ममाप्यन्तो भविष्यति। राजोवाच—भद्रम्, वप सुवर्णम्।

ततश्चौरः सुवर्णं दाहयित्वा सर्षपमात्राणि बीजानि कृत्वा राजान्तःपुरक्रीडासरसस्तटे परमनिगूढस्थाने भूपरिष्कारं कृत्वा बभाषे—देव ! क्षेत्रबीजे सम्पन्ने । वप्ता कश्चिद्दीयताम् । राजोवाच—त्वमेव किं न वपसि ?

चौर उवाच—यदि सुवर्णवपने ममैवाधिकारो भवति तदा किमहं दुःखी भवामि ? किं तु सुवर्णवपने चौरस्याधिकारो नास्ति । येन कदापि किमपि न चोरितमस्ति स वपतु । देव एव कि न वपति ?

राजोवाच—मया चारणेभ्यो दातुं तातचरणानां धनं चोरितम् । चौर उवाच—तर्हि मन्त्रिणो वपन्तु । मन्त्रिण ऊचुः—वयं राजोपजीविनः कथमस्तेयिनो भवामः ? चौर उवाच—तर्हि धर्माधिकारी वपतु । धर्माध्यक्ष उवाच—मयापि बाल्यदशायां मातुर्मोदकाश्चोरिताः । चौर उवाच—यूयं सर्वेऽपि चौराः । कथमहमेव मारणीयोऽस्मि ?

तच्चौरवचनं श्रुत्वा सभासदः सर्वे जहसुः । राजापि हास्यरसापनीतक्रोधो विहस्याह—रे चौर ! न मारणीयोऽसि । हे मन्त्रिणः ! कुबुद्धिरपि बुद्धिमानयं चौरः हास्यरसप्रवीणश्च । ततो ममैव सन्निधाने तिष्ठतु मां हासयतु मोदयतु च । ततः स चौरो राज्ञा स्वसन्निधाने धृतः ।

---

# मिवारप्रतापम्

## प्रतापशक्तसिंहसंवादः

शक्तसिंहः—(उपेत्य) आर्य ! आपदमपसार्य दासोऽयमभिवादयते । (इति पादयोः पतति)

प्रतापसिंहः—(शक्तसिंहस्य शिरसि हस्तं दत्त्वा) वत्स ! चिरञ्जीवी भूयाः । यावत् पृच्छामि आयुष्मता खल्वपसारिता कतमा नामापत् ।

शक्त—जानात्येवार्यो यथा रणाङ्गनादपसरन्तमेव भवन्तमन्वधावद् यवनयोधयुगलम् ।

प्रताप—जानामि ।

शक्त—मयापि तूर्णमनुधावता तावुभावेव नीतौ शमनसदनम् ।

उभौ—(परस्परमाश्लिषतः)

प्रताप—(सव्यथमिव) आयुष्मन् ! परं निर्विण्णोऽस्मि ।

शक्त—पराजयादपसरणाच्च ।

प्रताप—(साक्षेपम्) अथ किम् ।

शक्त—आर्यं वीरधौरेय !

रणे जयो वा यदि वा पराजयः
प्रजीवनं वा मरणञ्च वामये ।
भवेन्नृणामन्यतरः स्वभावतः
स्वभावभव्ये न हि भावनोचिता ॥

अपसरणमपि ते न निर्वेदहेतुः। येन हि...
(इत्यर्धोक्ते) (चैतको भुवि निपत्य चरणचतुष्टयं प्रसारयन् कण्ठे घर्घररवं करोति)।

प्रताप—(सत्रासवैक्लव्यम्) शक्त! शक्त! चैतको मज्जीवनं प्रदाय स्वजीवनं जहाति। (इत्युष्णीष-वातेन वीजयति)। (चैतकः शिरः सञ्चाल्य निस्पन्दो भवति)।

शक्त—(परीक्ष्य) आर्य! प्रहारातिरेकेण अजस्रमस्र-स्रंसनाच्छ्रमातिशयाच्च शरीरपिञ्जरान्निर्गतः खलु प्राणविहङ्गस्तुरङ्गस्य।

प्रताप—(साश्रुपातम्) किमुच्यते! चैतकस्य मे धिय-श्चातुर्यं शक्तिवैचित्र्यञ्च मानुषमप्यतिक्रान्तम्।

शक्त—(सखेदम्) वयमपि मन्यामहे भवतः सहायके हयाकृतिरसौ मनीषी मानुषविशेष एवासीदिति। येन हि—

तुल्येऽपि प्राणचैतन्ये बुद्धिवृत्तेर्गुणागुणात्।
मानुषो मानुषः ख्यातः पशुश्च पशुरुच्यते॥

प्रताप—(सवैक्लव्यम्) हा प्राणप्रिय! चैतक! त्वं खलु मे—

सलिले तरीर्गिरिवने तुरगो
रणसंकटे सुनिपुणः सचिवः।
परमः सखा विचरणे च चिरं
न हि वाहनं ननु वहन्नपि माम्॥

शक्त—(साशङ्कम्) आर्य ! अयुक्तमिदानीमावयोर्दीर्घ-कालमत्रावस्थानम् । तद्भवान् मदीयमेवाश्वमधि-रुह्य गच्छतु । अहमपि निहतयवनयोरेकतराश्वेन गच्छामि ।

प्रताप—एतदेवावयोरिदानीं युक्ततमम् ।

(इति तं तमश्वमारुह्योभौ निष्कान्तौ ।)

---

## माणवकगौरवम्

### धौम्योपमन्युसंवादः

(ततः प्रविशति सोमरातो नाम धौम्यशिष्यः ।)

सोमरातः—भगवन् ! एष सोमरातः प्रणमति ।

धौम्यः—स्वस्ति वत्साय सोमराताय । वत्स ! सोमरात !

सोम—भगवन् ! एषा माता कथयति—अवसितो गवां दोहः । सम्प्रति प्राप्तः सञ्चारणकालस्तासामिति ।

धौम्यः—आम् ! सम्यक् समुद्बोधितोऽस्मि । तद् वत्स ! सोमरात ! गत्वा विज्ञापय वो मातरम् एषोऽहं कालकलामनतीत्यैव गवां सञ्चारणस्य प्रबन्धं करोमीति ।

सोमरातः—यथाज्ञापयति भवान् ।

धौम्यः—वत्स ! उपमन्यो ! तवैवेदं कृत्यम् । तदकालहीनं सन्नद्धो भव स्वकृत्यमनुष्ठातुम् ।

उपमन्युः—एषोऽहं सन्नद्ध एवास्मि भगवन् !

धौम्यः—वत्स! कात्यायन ! गच्छ त्वमपि भिक्षाचरणाय ।

कात्यायनः—एवम् । यथादिशति भगवान् । (उभौ प्रस्थातुमुद्यतौ)

धौम्यः—वत्स ! उपमन्यो ! तिष्ठ त्वं क्षणमात्रम् । अस्ति मे त्वां प्रति वक्तव्यशेषः ।

उप—एष स्थितोऽस्मि । आदिशतु मां भगवान् ।

धौम्यः—वत्स ! गोसञ्चारणप्रसङ्गेन पृच्छामि ।
पर्वतोपत्यकायां त्वमतिदूरे किलाश्रमात् ।
सञ्चारयसि गा नित्यं वृत्तिं कल्पयसे कथम् ।

उप—भगवन् ! वत्सपीतावशिष्टेन पत्रपुटके संगृहीतेन गोरसेन वृत्तिं कल्पयामि ।

धौम्यः—आम् ! एवम् ? अत एव सर्वं दिनं परिश्राम्यतोऽपि ते तथा पुष्टं शरीरं कृशञ्च सुतरां गोवत्सानाम् ।

उप—भगवन् ! मदीयशरीरपरिपुष्टौ कारणं सुगमं, वत्सानां पुनः शरीरकार्श्ये को हेतुरिति नावधारयितुमर्हामि । तदुपदिशतु मां गुरुः ।

धौम्यः—वत्स ! किमत्राधिकमवधारणीयम् ! सचेतना गोवत्साः सुचिरं लालनेन त्वयि सानुकम्पा जनन्याः क्षीरं स्वच्छन्देनापिबन्तस्त्वदर्थं प्रभूतं शेषं रक्षन्ति तेनैव यथेष्टमपिबतां तेषामीदृशं शरीरकार्श्यमिति ।

उप—आम् ! ज्ञातम् । तद् भगवन् ! अतः परमन्येनैव केनचिद् वृत्तिं कल्पयिष्ये ।

धौम्यः—वत्स ! कथय केनान्येन वृत्तिः कल्पनीयेति ?

उप—भगवन् ! क्षीरं पिबतां वत्सानां मुखप्रान्तनिर्गलितैः फेनैरेव वृत्तिं कल्पयिष्ये ।

धौम्यः—वत्स ! नेदमप्यदोषं पश्यामि ।

उप—भगवन् ! कथमिव ?

धौम्यः—वत्स ! अल्पज्ञोऽसि येन नावधारयसि । तदवधेहि—

तथैव वत्सास्त्वयि सानुकम्पाः
फेनैः समं क्षीरमपि प्रदद्युः।
ततो यथेष्टं तदिहापिबन्त-
स्ते कायकार्श्यं नितरां लभेरन्॥

उप—आम्! ज्ञातम्। तदतः परमन्येनैव वृत्तिं कल्पयिष्ये।

धौम्यः—कथय वत्स! किन्तदन्यद् वस्तु येनातः परं स्वां वृत्तिं कल्पयितासि?

उप—(क्षणं विचिन्त्य) भगवन्! अतः परं भैक्ष्येण जीविकां कल्पयिष्यामि।

धौम्यः—वत्स! न तावतापि दोषान्मुच्यसे।

उप—भगवन्! अत्रापि कथं दोष इति नावगच्छामि।

धौम्यः—वत्स! नेदं दुरवबोधम्। दृश्यतां सावधानम्। गोसञ्चारणवेलायां निःसहाया गाः पर्वतोपत्यकायां परिहृत्य भिक्षाचरणाय सुदूरं प्रस्थिते त्वयि कुतोऽपि श्वापदाः समागत्य ताः पञ्चत्वं प्रापयेयुः।

उप—भगवन्! यद्येवं तदा गोषु क्षेमेणाश्रमं प्रविष्टासु वृत्तये भिक्षां चरिष्यामि।

धौम्यः—वत्स! मा मैवम्। यतस्तत्र दोषान्तरं प्रतिपक्षं लक्षयामि।

उप—किं नाम तद् भगवन्!

धौम्यः—वत्स! समाकर्णय। भिक्षाचरणार्थं मया समादिष्टेन कात्यायनेन सर्वतः समाहृते भैक्ष्ये पुनरपि

त्वया विहितेन भिक्षाचरणेन परेषां भिक्षुकाणां वृत्तिव्याघातो गृहपतीनामुत्पीडनञ्चेति द्वयमनिष्टमापद्येत ।

उप—भगवन् ! यद्येवं तदा वनावृतायां पर्वतोपत्यकायां गाः सञ्चारयता मया शक्या मुनिगृहीतावशिष्टैः फलमूलैः प्रस्रवणप्रस्रुतसलिलैरेव वा वृत्तिः कल्पयितुम् ।

धौम्यः—वत्स ! नेदमप्यदोषमवगन्तुमर्हसि ।

उप—किं कारणं भगवन् !

धौम्यः—वत्स ! अल्पज्ञेनापि सुज्ञेयमिदम् । तथापि यदि न वेत्सि तदाकर्णय । मुनिगृहीतावशिष्टैः फलस्तोमैरनन्यशरणाः पक्षिणो जीवन्ति । तदेवं त्वया विहितेनोपप्लवेन निरुद्धवृत्तयस्ते जीवनाद् विमुच्येरन् । मूलेषु च त्वया समाहृतेषु तदुपजीविनां शल्लकीप्रभृतीनां कीदृशी गतिर्भविता ? तदेवं निरस्तश्चरमोऽपि त्वत्परिकल्पितः पक्षः ।

उप—(स्वगतम्) अहो व्याघातः ! एवमुपनते सर्वोपायनिरोधे किमस्ति मे शरणं वृत्तये मन्दभाग्यस्य ? (क्षणं विचिन्त्य) अथवा दृष्टम् । सन्ति काननप्ररूढानां पादपानां पत्राणि । तान्येव सन्तु मे शरणमनन्यशरणस्य । (प्रकाशम्) भगवन् ! अपि नाम शक्या मया भवदनुमत्या वृक्षाणां पत्रकैः कल्पयितुं वृत्तिः ?

धौम्यः—वत्स ! अथ किम् । शक्यमिदमदोषमभ्युपगन्तुम् । परन्तु वत्स ! वृक्षपत्रकाण्यपि स्वयमशीर्णानि त्वया नोपयोक्तव्यानि ।

उप—भगवन् ! कथमेतत् ?

धौम्यः—श्रूयतां वत्स !

अन्तःसंज्ञस्य वृक्षस्य पत्रमङ्गं शरीरतः ।
बलाद् वियोजितं तस्य व्यथां संजनयत्यलम् ॥

तत् पादपशरीरात् स्वयं शीर्णान्येव पर्णानि त्वया वृत्तये शक्यान्युपयोक्तुम् ।

उप—एवमेवास्तु भगवन् !

धौम्यः—वत्स ! प्रीतोऽस्मि ते । तद् गच्छेदानीं स्वकृत्यमनुष्ठातुम् ।

शिवास्ते सन्तु पन्थानस्त्वां रक्षन्तु सदा सुराः ।
स्वकृत्ये वर्तमानस्य सर्वं करगतं हितम् ॥

उप—अनुगृहीतोऽस्मि । भगवन् ! एष दासस्य मे गृह्यतां प्रणामपर्यायः । तद् गच्छामि ।

धौम्यः—गच्छ वत्स ! पुनर्दर्शनाय ।

(निष्क्रान्त उपमन्युः ।)



# रामायणम्

## पादुकाग्रहणम्

ततस्त्वृषिगणाः क्षिप्रं दशग्रीववधैषिणः ।
भरतं राजशार्दूलमित्युचूः सङ्गता वचः ॥१॥
कुलेजात महाप्राज्ञ महावृत्त महायशः ।
ग्राह्यं रामस्य वाक्यं ते पितरं यद्यवेक्षसे ॥२॥
सदानृणमिमं रामं वयमिच्छामहे पितुः ।
अनृणत्वाच्च कैकेय्याः स्वर्गं दशरथो गतः ॥३॥
ह्लादितस्तेन वाक्येन शुभेन शुभदर्शनः ।
रामः संहृष्टवदनस्तान् ऋषीनभ्यपूजयन् ॥४॥
त्रस्तगात्रस्तु भरतः स वाचा सज्जमानया ।
कृताञ्जलिरिदं वाक्यं राघवं पुनरब्रवीत् ॥५॥
राजधर्ममनुप्रेक्ष्य कुलधर्मानुसन्ततिम् ।
कर्तुमर्हसि काकुत्स्थ मम मातुश्च याचनाम् ॥६॥
रक्षितुं सुमहद् राज्यमहमेकस्तु नोत्सहे ।
पौरजानपदांश्चापि रक्तान् रञ्जयितुं तथा ॥७॥
ज्ञातयश्च हि योधाश्च मित्राणि सुहृदश्च नः ।
त्वामेव प्रतिकाङ्क्षन्ते पर्यन्यमिव कर्षकाः ॥८॥
इदं राज्यं महाप्राज्ञ स्थापय प्रतिपद्य हि ।
शक्तिमानसि काकुत्स्थ लोकस्य परिपालने ॥९॥

इत्युक्त्वा न्यपतद् भ्रातुः पादयोभरतस्तदा ।
भृशं संप्रार्थयामास राममेव प्रियंवदः ॥१०॥
तमङ्के भ्रातरं कृत्वा रामो वचनमब्रवीत् ।
श्यामं नलिनपत्राक्षं मत्तहंसस्वरः स्वयम् ॥११॥
आगता त्वामियं बुद्धिः स्वजा वैनयिकी च या ।
भृशमुत्सहसे तात रक्षितुं पृथिवीमपि ॥१२॥
अमात्यैश्च सुहृद्भिश्च बुद्धिमद्भिश्च मन्त्रिभिः ।
सर्वकार्याणि संमन्त्र्य सुमहान्त्यपि कारय ॥१३॥
लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान् वा हिमं त्यजेत् ।
अतीयात् सागरो वेलां न प्रतिज्ञामहं पितुः ॥१४॥
कामाद्वा तात लोभाद्वा मात्रा तुभ्यमिदं कृतम् ।
न तन्मनसि कर्तव्यं वर्तितव्यञ्च मातृवत् ॥१५॥
एवं ब्रुवाणं भरतः कौशल्यासुतमब्रवीत् ।
तेजसादित्यसङ्काशं प्रतिपच्चन्द्रदर्शनम् ॥१६॥
अधिरोहार्य पादाभ्यां पादुके हेमभूषिते ।
एते हि सर्वलोकस्य योगक्षेमं विधास्यतः ॥१७॥
सोऽधिरुह्य नरव्याघ्रः पादुके व्यवमुच्य च ।
प्रायच्छत् सुमहातेजा भरताय महात्मने ॥१८॥
स पादुके संप्रणम्य रामं वचनमब्रवीत् ।
चतुर्दश हि वर्षाणि जटाचीरधरो ह्यहम् ॥
फलमूलाशनो वीर भवेयं रघुनन्दन ।
तवागमनमाकाङ्क्षन् वसन् वै नगराद् बहिः ।
तव पादुकयोर्न्यस्य राज्यतन्त्रं परन्तप ॥१६-२०॥

चतुर्दशे हि सम्पूर्णे वर्षेऽहनि रघूत्तम ।
न द्रक्ष्यामि यदि त्वां तु प्रवेक्ष्यामि हुताशनम् ॥२१॥
तथेति च प्रतिज्ञाय तं परिष्वज्य सादरम् ।
शत्रुघ्नञ्च परिष्वज्य भरतञ्चेदमब्रवीत् ॥२२॥
मातरं रक्ष कैकेयीं मा रोषं कुरु तां प्रति ॥
मया च सीतया चैव शप्तोऽसि रघुसत्तम ॥२३॥
इत्युक्त्वाश्रुपरीताक्षो भ्रातरं विससर्ज ह ॥२४॥

स पादुके ते भरतः प्रतापवान्
स्वलंकृते संपरिगृह्य धर्मवित् ।
प्रदक्षिणञ्चैव चकार राघवं
चकार चैवोत्तमनागमूर्धनि ॥२५॥

---

## शक्त्याहते लक्ष्मणे रामस्य खेदस्तस्य समाश्वासनञ्च

शक्त्या निपतितं दृष्ट्वा रावणेन बलीयसा ।
लक्ष्मणं समरे शूरं शोणितौघपरिप्लुतम् ॥
स दत्त्वा तुमुलं युद्धं रावणस्य दुरात्मनः ।
विसृजन्निव बाणौघान् सुषेणमिदमब्रवीत् ॥१-२॥
एष रावणवीर्येण लक्ष्मणः पतितो भुवि ।
सर्पवच्चेष्टते वीरो मम शोकमुदीरयन् ॥३॥

शोणितार्द्रमिमं वीरं प्राणैः प्रियतरं मम ।
पश्यतो मम का शक्तिर्योद्धुं पर्याकुलात्मनः ।।४।।
अयं स समरश्लाघी भ्राता मे शुभलक्षणः ।
यदि पञ्चत्वमापन्नः प्राणैर्मे किं सुखेन वा ।।५।।
लज्जतीव हि मे वीर्यं भ्रश्यतीव कराद्धनुः ।
सायका व्यवसीदन्ति दृष्टिर्बाष्पवशं गता ।।६।।
अवसीदन्ति गात्राणि स्वप्नयाने नृणामिव ।
चिन्ता मे जायते तीव्रा मुमूर्षा चोपजायते ।। ७ ।।
भ्रातरं निहतं दृष्ट्वा रावणेन दुरात्मना ।
विनिष्टनन्तं दुःखार्तं मर्मण्यभिहतं भृशम् ।।
परं विषादमापन्नो विललापाकुलेन्द्रियः ।
भ्रातरं निहतं दृष्ट्वा लक्ष्मणं रणपांशुषु ।।८-९।।
विजयोऽपि हि मे शूर ! न प्रियायोपकल्पते ।
अचक्षुर्विषयश्चन्द्रः कां प्रीतिं जनयिष्यति ।।१०।।
किं मे युद्धेन किं प्राणैर्युद्धकार्यं न विद्यते ।
यत्रायं निहतः शेते रणमूर्धनि लक्ष्मणः ।।११।।
यथैव मां वनं यान्तमनुयाति महाद्युतिः ।
अहमप्यनुयास्यामि तथैवैनं यमक्षयम् ।।१२।।
इष्टवन्धुजनो नित्यं मां स नित्यमनुव्रतः ।
इमामवस्थां गमितो राक्षसैः कूटयोधिभिः ।।१३।।
देशे देशे कलत्राणि देशे देशे च बान्धवाः ।
तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ।।१४।।

सीतया किन्नु राज्येन लक्ष्मणेन विना मम ।
किन्नु वक्ष्याम्यहं त्वम्बां सुमित्रां पुत्रवत्सलाम् ॥१५॥
उपालम्भं न शक्ष्यामि सोढुं दत्तं सुमित्रया ।
किन्नु वक्ष्यामि कौशल्यां मातरं किन्नु केकयीम् ॥१६॥
भरतं किन्नु वक्ष्यामि शत्रुघ्नं च महाबलम् ?
सह तेन वनं यातो विना तेनागतः कथम् ॥१७॥
इहैव मरणं श्रेयो न तु बन्धुविगर्हणम् ।
किं मया दुष्कृतं कर्म कृतमन्यत्र जन्मनि ।
येन मे धार्मिको भ्राता निहतश्चाग्रतः स्थितः ॥१८॥
हा भ्रातर्मनुजश्रेष्ठ ! शूराणां प्रवर ! प्रभो !
एकाकी किन्नु मां त्यक्त्वा परलोकाय गच्छसि ॥१९॥
विलपन्तं च मां भ्रातः किमर्थं नावभाषसे ।
उत्तिष्ठ पश्य किं शेषे दीनं मां पश्य चक्षुषा ॥२०॥
शोकार्तस्य प्रमत्तस्य पर्वतेषु वनेषु च ।
विषण्णस्य महाबाहो ! समाश्वासयिता मम ॥२१॥
राममेवं ब्रुवाणं तं शोकव्याकुलितेन्द्रियम् ।
आश्वासयन्नुवाचेदं सुषेणः परमं वचः ॥२२॥
त्यजेमां नरशार्दूल ! बुद्धिं वैक्लव्यकारिणीम् ।
शोकसञ्जननीं चिन्तां तुल्यां बाणैश्चमूमुखे ॥२३॥
नैव पञ्चत्वमापन्नो लक्ष्मणो लक्ष्मिवर्धनः ।
न ह्यस्य विकृतं वक्त्रं न च श्यामं न निष्प्रभम् ॥२४॥
सुप्रभं च प्रसन्नं च मुखमस्य निरीक्ष्यताम् ।
पद्मपत्रतलौ हस्तौ सुप्रसन्ने च लोचने ॥२५॥

नेदृशं दृश्यते रूपं गतासूनां विशाम्पते ।
विषादं मा कृथा वीर सप्राणोऽयमरिन्दमः ।।२६।।
आख्याति तु प्रसुप्तस्य स्रस्तगात्रस्य भूतले ।
सोच्छ्वासं हृदयं वीर! कम्पमानं मुहूर्मुहुः ।।२७।।
एवमुक्त्वा महाप्राज्ञः सुषेणो राघवं वचः ।
समीपस्थमुवाचेदं हनूमन्तं महाकपिम् ।।२८।।
सौम्य! शीघ्रमितो गत्वा पर्वतं हि महोदयम् ।
दक्षिणे शिखरे जातां महौषधिमिहानय ।।२९।।
विशल्यकरणीं नाम्ना सावर्ण्यकरणीं तथा ।
सञ्जीवनार्थं वीरस्य लक्ष्मणस्य त्वमानय ।।३०।।

---

## सीतायाः पातालप्रवेशः

रामो बहून्यहान्येव तद् गीतं परमं शुभम् ।
शुश्राव मुनिभिः सार्धं पार्थिवैः सह वानरैः ।।१।।

तस्मिन् गीते तु विज्ञाय सीतापुत्रौ कुशीलवौ ।
तस्याः परिषदो मध्ये रामो वचनमब्रवीत् ।।२।।

दूतान् शुद्धसमाचारानाहूयात्ममनीषया ।
मद्वचो ब्रूत गच्छध्वमितो भगवतोऽन्तिके ।।३।।

यदि शुद्धसमाचारा यदि वा वीतकल्मषा ।
करोत्विहात्मनः शुद्धिमनुमान्य महामुनिम् ॥४॥

छन्दं मुनेश्च विज्ञाय सीतायाश्च मनोगतम् ।
प्रत्ययं दातुकामायास्ततः शंसत मे लघु ॥५॥

श्वः प्रभाते तु शपथं मैथिली जनकात्मजा ।
करोतु परिषन्मध्ये शोधनार्थं ममैव च ॥६॥

श्रुत्वा तु राघवस्यैतद् वचः परमद्भुतम् ।
दूताः सम्प्रययुर्वाटं यत्र वै मुनिपुङ्गवः ॥७॥

ते प्रणम्य महात्मानं ज्वलन्तममितप्रभम् ।
ऊचुस्ते रामवाक्यानि मृदूनि मधुराणि च ॥८॥

तेषां तद् भाषितं श्रुत्वा रामस्य च मनोगतम् ।
विज्ञाय सुमहातेजा मुनिर्वाक्यमथाब्रवीत् ॥९॥

एवं भवतु भद्रं वो यथा वदति राघवः ।
तथा करिष्यते सीता दैवतं हि पतिः स्त्रियाः ॥१०॥

तथोक्ता मुनिना सर्वे राजदूता महौजसः ।
प्रत्येत्य राघवं सर्वं मुनिवाक्यं बभाषिरे ॥११॥

ततः प्रहृष्टः काकुत्स्थः श्रुत्वा वाक्यं महात्मनः ॥
ऋषींस्तत्र समेतांश्च राज्ञश्चैवाभ्यभाषत ॥१२॥

भगवन्तः सशिष्या वै सानुगाश्च नराधिपाः ।
पश्यन्तु सीताशपथं यश्चैवान्योऽपि काङ्क्षते ॥१३॥

तस्य तद् वचनं श्रुत्वा राघवस्य महात्मनः ।
सर्वेषामृषिमुख्यानां साधुवादो महानभूत् ॥१४॥

राजानश्च महात्मानः प्रशंसन्ति स्म राघवम् ।
उपपन्नं नरश्रेष्ठ !  त्वय्येव भुवि नान्यतः ॥१५॥

अथ तत्र समाजग्मुर्मुनयः संशितव्रताः ।
कौतूहलसमाविष्टाः सर्वं एव समन्ततः ॥१६॥

राक्षसाश्च महावीर्या वानराश्च महाबलाः ।
क्षत्रिया ये च शूद्राश्च वैश्याश्चैव सहस्रशः ॥१७॥

नानादेशगताश्चैव ब्राह्मणाः संशितव्रताः ।
सीताशपथवीक्षार्थं सर्वं एव समागताः ॥१८॥

तदा समागतं सर्वमश्मभूतमिवाचलम् ।
श्रुत्वा मुनिवरस्तूर्णं ससीतः समुपागमत् ॥१९॥

तम् ऋषिं पृष्ठतः सीता अन्वगच्छदवाङ्मुखी ।
रामं मनोगतं कृत्वा साश्रुनेत्रा कृताञ्जलिः ॥२०॥

तां दृष्ट्वा श्रुतिमायान्तीं ब्रह्माणमनुगामिनीम् ।
वाल्मीकेः पृष्ठतः सीतां साधुवादो महानभूत् ॥२१॥

ततो हलहलाशब्दः सर्वेषामेवमावभौ ।
दुःखजन्मविशालेन शोकेनाकुलितात्मनाम् ॥२२॥

साधु रामेति केचित्तु साधु सीतेति चापरे ।
उभावेव च तत्रान्ये प्रेक्षकाः सम्प्रचुक्रुशुः ॥२३॥

ततो मध्ये जनौघस्य प्रविश्य मुनिपुङ्गवः ।
सीतासहायो वाल्मीकिरिति होवाच राघवम् ।।२४।।

इयं दाशरथे ! सीता सुव्रता धर्मचारिणी ।
अपवादात् परित्यक्ता ममाश्रमसमीपतः ।।२५।।

लोकापवादभीतस्य तव राम महाव्रत ।
प्रत्ययं दास्यते सीता तामनुज्ञातुमर्हसि ।।२६।।

इमौ च जानकीपुत्रावुभौ च यमजातकौ ।
सुतौ तवैव दुर्धर्षौ सत्यमेतद् ब्रवीमि ते ।।२७।।

प्रचेतसोऽहं दशमः पुत्रो राघवनन्दन !
न स्मराम्यनृतं वाक्यमिमौ हि तव पुत्रकौ ।।२८।।

बहुवर्षसहस्राणि तपश्चर्या मया कृता ।
नोपाश्नीयां फलं तस्या दुष्टेयं यदि मैथिली ।।२९।।

इयं शुद्धसमाचारा ह्यपापा पतिदेवता ।
लोकापवादभीतस्य प्रत्ययं तव दास्यति ।।३०।।

तस्मादियं नरवरात्मज ! शुद्धभावा
दिव्येन दृष्टिविषयेण मया प्रदिष्टा ।
लोकापवादकलुषीकृतचेतसा यत्
त्यक्ता त्वया प्रियतमा विदितापि शुद्धा ।।३१।।

वाल्मीकिनैवमुक्तस्तु राघवः प्रत्यभाषत ।
प्राञ्जलिर्जनतामध्ये दृष्ट्वा तां वरवर्णिनीम् ।।३२।।

एवमेतन्महाभाग ! यथा वदसि धर्मवित् ।
प्रत्ययस्तु मम ब्रह्मंस्तव वाक्यैरकल्मषैः ॥३३॥

प्रत्ययश्च पुरा दत्तो वैदेह्या सुरसन्निधौ ।
शपथश्च कृतस्तत्र तेन वेश्म प्रवेशिता ॥३४॥

लोकापवादो बलवान् येन त्यक्ता हि मैथिली ।
सेयं लोकभयाद् ब्रह्मन्नपापेत्यभिजानता ।
परित्यक्ता मया सीता तद् भवान् क्षन्तुमर्हति ॥३५॥

जानामि चेमौ पुत्रौ मे यमजातौ कुशीलवौ ।
शुद्धायां जगतो मध्ये वैदेह्यां प्रीतिरस्तु मे ॥३६॥

सर्वान् समागतान् दृष्ट्वा सीता काषायवासिनी ।
अब्रवीत् प्राञ्चलिर्वाक्यमधोदृष्टिरवाङ्मुखी ॥३७॥

यथाहं राघवादन्यं मनसापि न चिन्तये ।
तथा मे माधवी देवी विवरं दातुमर्हति ॥३८॥

मनसा कर्मणा वाचा यथा रामं समर्चये ।
तथा मे माधवी देवी विवरं दातुमर्हति ॥३९॥

यथैतत् सत्यमुक्तं मे वेद्मि रामात् परं न च ।
तथा मे माधवी देवी विवरं दातुमर्हति ॥४०॥

तथा शपन्त्यां वैदेह्यां प्रादुरासीत् तदद्भुतम् ।
भूतलादुत्थितं दिव्यं सिंहासनमनुत्तमम् ॥४१॥

ध्रियमाणं शिरोभिस्तु नागैरमितविक्रमैः ।
दिव्यं दिव्येन वपुषा दिव्यरत्नविभूषितैः ॥४२॥

तस्मिंस्तु धरणी देवी बाहुभ्यां गृह्य मैथिलीम् ।
स्वागतेनाभिनन्द्यैनामासने चोपवेशयत् ॥४३॥

तामासनगतां दृष्ट्वा प्रविशन्तीं रसातलम् ।
पुष्पवृष्टिरविच्छिन्ना दिव्या सीतामवाकिरत् ॥४४॥

साधुकारश्च सुमहान् देवानां सहसोत्थितः ।
साधु साध्विति वै सीते ! यस्यास्ते शीलमीदृशम् ॥४५॥

एवं बहुविधा वाचो ह्यन्तरीक्षगताः सुराः ।
व्याजह्रुर्हृष्टमनसा दृष्ट्वा सीताप्रवेशनम् ॥४६॥



# महाभारतम्

## श्रीकृष्णदौत्यम्

जीमूत इव घर्मान्ते सर्वां संश्रावयन् सभाम् ।
धृतराष्ट्रमभिप्रेक्ष्य समभाषत माधवः ॥१॥
कुरूणां पाण्डवानाञ्च शमः स्यादिति भारत ।
अप्रणाशेन वीराणामेतद् यतितुमागतः ॥२॥
राजन् नान्यत् प्रवक्तव्यं तव निःश्रेयसं वचः ।
विदितं ह्येव ते सर्वं वेदितव्यमरिन्दम ॥३॥
इदं ह्यद्य कुलं श्रेष्ठं सर्वराजसु पार्थिव ।
श्रुतवृत्तोपसम्पन्नं सर्वैः समुदितं गुणैः ॥४॥
तस्मिन्नेवंविधे राजन् कुले महति तिष्ठति ।
त्वन्निमित्तं विशेषेण नेह युक्तमसाम्प्रतम् ॥५॥
ते पुत्रास्तव कौरव्य दुर्योधनपुरोगमाः ।
धर्मार्थौ पृष्ठतः कृत्वा प्रचरन्ति नृशंसवत् ॥६॥
अशिष्टा गतमर्यादा लोभेन हृतचेतसः ।
स्वेषु बन्धुषु मुख्येषु तद् वेत्थ पुरुषर्षभ ॥७॥
सेयमापन्महाघोरा कुरुष्वेव समुत्थिता ।
उपेक्ष्यमाणा कौरव्य पृथिवीं घातयिष्यति ॥८॥
शक्या चेयं शमयितुं त्वं चेदिच्छसि भारत ।
न दुष्करो ह्यत्र शमो मतो मे भरतर्षभ ॥९॥

त्वय्यधीनः शमो राजन् मयि चैव विशाम्पते ।
पुत्रान् स्थापय कौरव्य स्थापयिष्याम्यहं परान् ॥१०॥
एतान्नेव पुरोधाय सत्कृत्य च यथा पुरा ।
अखिलां भोक्ष्यसे सर्वां पृथिवीं पृथिवीपते ॥११॥
एतैर्हि सहितैः सर्वैः पाण्डवैः स्वैश्च भारत ।
अन्यान् विजेष्यसे शत्रूनेष स्वार्थस्तवाखिलः ॥१२॥
संयुगे वै महाराज दृश्यते सुमहान् क्षयः ।
क्षये चोभयतो राजन् कं धर्ममनुपश्यसि ॥१३॥
शूराश्च हि कृतास्त्राश्च सर्वे युद्धाभिकाङ्क्षिणः ।
पाण्डवास्तावकाश्चैव तान् रक्ष महतो भयात् ॥१४॥
हार्दं यत् पाण्डवेष्वासीत् प्राप्तेऽस्मिन्नायुषः क्षये ।
तदेव ते भवत्वद्य शश्वच्च भरतर्षभ ॥१५॥
बाला विहीनाः पित्रा ते त्वयैव परिवर्धिताः ।
तान् पालय यथान्यायं पुत्रांश्च मनुजेश्वर ॥१६॥
पित्र्यं तेभ्यः प्रदायांशं पाण्डवेभ्यो यथोचितम् ।
ततः सपुत्रः सिद्धार्थो भुङ्क्ष्व भोगान् परन्तप ॥१७॥
अहन्तु तव तेषाञ्च श्रेय इच्छामि भारत ।
धर्मादर्थात् सुखाच्चैव मा राजन्नीनशः प्रजाः ॥१८॥
स्थिताः शुश्रूषितुं पार्थाः स्थिता योद्धुमरिन्दमाः ।
यत्ते पथ्यतमं राजंस्तस्मिंस्तिष्ठ परन्तप ॥१९॥
ततोऽभ्यावृत्य वार्ष्णेयो दुर्योधनममर्षणम् ।
अब्रवीन्मधुरां वाचं सर्वधर्मार्थतत्त्ववित् ॥२०॥

दुर्योधन निबोधेदं मद्वाक्यं कुरुसत्तम ।
समर्थं ते विशेषेण सानुबन्धस्य भारत ॥२१॥
महाप्राज्ञ कुले जातः साध्वेतत् कर्तुमर्हसि ।
श्रुतवृत्तोपसम्पन्नः सर्वैः समुदितो गुणैः ॥२२॥
दौष्कुलेया दुरात्मानो नृशंसा निरपत्रपाः ।
त एतदीदृशं कुर्युर्यथा त्वं तात मन्यसे ॥२३॥
प्राज्ञैः शूरैर्महोत्साहैरात्मवद्भिर्बहुश्रुतैः ।
सन्धत्स्व पुरुषव्याघ्र पाण्डवैर्भरतर्षभ ॥२४॥
रोचते ते पितुस्तात पाण्डवैः सह सङ्गमः ।
सामात्यस्य कुरुश्रेष्ठ तत् तुभ्यं तात रोचताम् ॥२५॥
त्वामेव स्थापयिष्यन्ति यौवराज्ये महारथाः ।
महाराज्ये च पितरं धृतराष्ट्रं जनेश्वरम् ॥२६॥
मा तात श्रियमायान्तीमवमंस्थाः समुद्यताम् ।
अर्धं प्रदाय पार्थेभ्यो महतीं श्रियमाप्स्यसि ॥२७॥
श्रुत्वा दुर्योधनो वाक्यमप्रियं कुरुसंसदि ।
प्रत्युवाच महाबाहुं वासुदेवं यशस्विनम् ॥२८॥
प्रसमीक्ष्य भवानेतद् वक्तुमर्हति केशव ।
मामेव हि विशेषेण विभाष्य परिगर्हसे ॥२९॥
भक्तिवादेन पार्थानामकस्मान्मधुसूदन ।
भवान् गर्हयते नित्यं किं समीक्ष्य बलाबलम् ॥३०॥
न चाहं लक्षये किञ्चिद् व्यभिचारमिहात्मनः ।
अथ सर्वे भवन्तो मां विद्विषन्ति सराजकाः ॥३१॥

अपराधो न चास्माकं यत् ते ह्यक्षपराजिताः ।
अजेया जयतां श्रेष्ठ पार्थाः प्रव्राजिता वनम् ।।३२।।
न चापि वयमुग्रेण कर्मणा वचनेन वा ।
वित्रस्ताः प्रणमामेह भयादपि शतक्रतोः ।।३३।।
स्वधर्ममनुनिष्ठन्तो यदि माधव संयुगे ।
शस्त्रेण निधनं काले प्राप्स्यामः स्वर्गमेव तत् ।।३४।।
राज्यांशश्चाभ्यनुज्ञातो यो मे पित्रा पुराभवत् ।
न स लभ्यः पुनर्जातु मयि जीवति केशव ।।३५।।
यावद्धि सूच्यास्तीक्ष्णाया विध्येदग्रेण माधव ।
तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान् प्रति ।।३६।।
ततः प्रहस्य दाशार्हः क्रोधपर्याकुलेक्षणः ।
दुर्योधनमिदं वाक्यमब्रवीत् कुरुसंसदि ।।३७।।
कृत्वा बह्वन्यकार्याणि पाण्डवेषु नृशंसवत् ।
मिथ्यावृत्तिरनार्यः सन्नद्य विप्रतिपद्यसे ।।३८।।
शमे हि सुमहानर्थस्तव पार्थस्य चोभयोः ।
तत् ते न रोचते राजन् किमन्यद् बुद्धिलाघवात् ।।३९।।
न शर्म प्राप्स्यसे राजन्नुत्क्रम्य सुहृदां वचः ।
अधर्म्यमयशस्यं च क्रियते पार्थिव त्वया ।।४०।।

---

## धृतराष्ट्रविलापः

यदाऽश्रौषं धनुरायम्य चित्रं
विद्धं लक्ष्यं पातितं वै पृथिव्याम् ।
कृष्णां हृतां प्रेक्षतां सर्वराज्ञां
तदा नाशंसे विजयाय सञ्जय ! ॥१॥

यदाऽश्रौषं देवराजं प्रवृष्टं
शरैर्दिव्यैर्वारितं चार्जुनेन ।
अग्निं तदा तर्पितं खाण्डवे च ।
तदा नाशंसे विजयाय सञ्जय ! ॥२॥

यदाऽश्रौषं जातुषाद् वेश्मनस्तान्
मुक्तान् पार्थान् पञ्च कुन्त्या समेतान् ।
युक्तं चैषां विदुरं स्वार्थसिद्धयै
तदा नाशंसे विजयाय सञ्जय ! ॥३॥

यदाऽश्रौषं द्रौपदीं रङ्गमध्ये
लक्ष्यं भित्त्वा निर्जितामर्जुनेन ।
शूरान् पाञ्चालान् पाण्डवेयांश्च युक्तां-
स्तदा नाशंसे विजयाय सञ्जय ! ॥४॥

यदाऽश्रौषं मागधानां वरिष्ठं
जरासन्धं क्षत्त्रमध्ये ज्वलन्तम् ।
दोर्भ्यां हतं भीमसेनेन गत्वा
तदा नाशंसे विजयाय सञ्जय ! ॥५॥

यदाऽश्रौषं दिग्जये पाण्डुपुत्रै-
र्वशीकृतान् भूमिपालान् प्रसह्य ।
महाक्रतुं राजसूयं कृतं च
तदा नाशंसे विजयाय सञ्जय ! ॥६॥

यदाऽश्रौषं हृतराज्यं युधिष्ठिरं
पराजितं सौबलेनाक्षवत्याम् ।
अन्वागतं भ्रातृभिरप्रमेयै-
स्तदा नाशंसे विजयाय सञ्जय ! ॥७॥

यदाऽश्रौषमर्जुनो देवदेवं
किरातरूपं त्र्यम्बकं तोष्य युद्धे ।
अवाप तत् पाशुपतं महास्त्रं
तदा नाशंसे विजयाय सञ्जय ! ॥८॥

यदाऽश्रौषं त्रिदिवस्थं धनञ्जयं
शक्रात् साक्षात् दिव्यमस्त्रं यथावत् ।
अधीयानं शंसितं सत्यसन्धं
तदा नाशंसे विजयाय सञ्जय ! ॥९॥

यदाऽश्रौषं घोषयात्रागतानां
बन्धं गन्धर्वैर्मोक्षणं चार्जुनेन ।
स्वेषां सुतानां कर्णबुद्धौ रतानां
तदा नाशंसे विजयाय सञ्जय ! ॥१०॥

यदाऽश्रौषं यक्षरूपेण धर्मं
समागतं धर्मराजेन सूत !

प्रश्नानुक्तान् विब्रुवन्तं च सम्यक्
तदा नाशंसे विजयाय सञ्जय ! ॥११॥

यदाऽश्रौषं न विदुर्मामिकास्ते
प्रच्छन्नरूपान् वसतः पाण्डवेयान् ।
विराटराष्ट्रे सह कृष्णया तां-
स्तदा नाशंसे विजयाय सञ्जय ! ॥१२॥

यदाऽश्रौषं सत्कृतां मत्स्यराज्ञा
सुतां दत्तामुत्तरामर्जुनाय ।
तां चार्जुनः प्रत्यगृह्णात् सुतार्थे
तदा नाशंसे विजयाय सञ्जय ! ॥१३॥

यदाऽश्रौषं माधवं वासुदेवं
सर्वात्मना पाण्डवार्थे निविष्टम् ।
यस्येमां गां विक्रममेकमाहु-
स्तदा नाशंसे विजयाय सञ्जय ! ॥१४॥

यदाऽश्रौषं लोकहिताय कृष्णं
शमार्थिनमुपयातं कुरूणाम् ।
शमं कुर्वाणमकृतार्थं च यातं
तदा नाशंसे विजयाय सञ्जय ! ॥१५॥

यदाऽश्रौषं कर्णदुर्योधनाभ्यां
बुद्धिं कृतां निग्रहे केशवस्य ।
तं चात्मानं बहुधा दर्शयानं
तदा नाशंसे विजयाय सञ्जय ! ॥१६॥

यदाऽश्रौषं वासुदेवार्जुनौ तौ
तथा धनुर्गाण्डीवमप्रमेयम् ।
त्रीण्युग्रवीर्याणि समागतानि
तदा नाशंसे विजयाय सञ्जय ! ॥१७॥

यदाऽश्रौषं कश्मलेनाभिपन्ने
रथोपस्थे सीदमानेऽर्जुने वै ।
कृष्णं लोकान् दर्शयानं शरीरे
तदा नाशंसे विजयाय सञ्जय ! ॥१८॥

यदाऽश्रौषं चापगेयेन संख्ये
स्वयं मृत्युं विहितं धार्मिकेण ।
तच्चाकार्षुः पाण्डवेयाः प्रहृष्टा-
स्तदा नाशंसे विजयाय सञ्जय ! ॥१९॥

यदाऽश्रौषं भीष्ममत्यन्तशूरं
हतं पार्थेनाहवेष्वप्रधृष्यम् ।
शिखण्डिनं पुरतः स्थापयित्वा
तदा नाशंसे विजयाय सञ्जय ! ॥२०॥

यदाऽश्रौषं व्यूहमभेद्यमन्यै-
र्भारद्वाजेनात्तशस्त्रेण गुप्तम् ।
भित्त्वा सौभद्रं वीरमेकं प्रविष्टं
तदा नाशंसे विजयाय सञ्जय ! ॥२१॥

यदाऽभिमन्युं परिवार्य बालं
सर्वे हत्वा हृष्टरूपा बभूवुः ।

महारथाः पार्थमशक्नुवन्त-
स्तदा नाशंसे विजयाय सञ्जय ! ।।२२।।

यदाऽश्रौषं देवराजेन दत्तां
दिव्यां शक्तिं व्यंसितां माधवेन ।
घटोत्कचे राक्षसे घोररूपे
तदा नाशंसे विजयाय सञ्जय ! ।।२३।।

यदाऽश्रौषं द्रोणमाचार्यमेकं
धृष्टद्युम्नेनाभ्यतिक्रम्य धर्मम् ।
रथोपस्थे प्रायगतं विशस्तं
तदा नाशंसे विजयाय सञ्जय ! ।।२४।।

यदाऽश्रौषं भीमसेनेन पीतं
रक्तं भ्रातुर्युधि दुःशासनस्य ।
निवारितं नान्यतमेन भीमं
तदा नाशंसे विजयाय सञ्जय ! ।।२५।।

यदाऽश्रौषं कर्णमत्यन्तशूरं
हतं पार्थेनाहवेष्वप्रधृष्यम् ।
तस्मिन् भ्रातृणां विग्रहे देवगुह्ये
तदा नाशंसे विजयाय सञ्जय ! ।।२६।।

यदाऽश्रौषं कलहद्यूतमूलं
मायाबलं सौबलं पाण्डवेन ।
हतं संग्रामे सहदेवेन पापं
तदा नाशंसे विजयाय सञ्जय ! ।।२७।।

यदाऽश्रौषं पाण्डवांस्तिष्ठमानान्
गत्वा ह्रदे वासुदेवेन सार्धम् ।
अमर्षणं धर्षयतः सुतं मे
तदा नाशंसे विजयाय सञ्जय ! ॥२८॥

यदाऽश्रौषं द्रोणपुत्रादिभिस्तै-
र्हतान् पाञ्चालान् द्रौपदेयांश्च सुप्तान् ।
कृतं बीभत्समयशस्यं च कर्म
तदा नाशंसे विजयाय सञ्जय ! ॥२९॥

यदाऽश्रौषं ब्रह्मशिरोर्जुनेन
मुक्तं स्वस्तीत्यस्त्रमस्त्रेण शान्तम् ।
अश्वत्थाम्ना मणिरत्नं च दत्तं
तदा नाशंसे विजयाय सञ्जय ! ॥३०॥

शोच्या गान्धारी पुत्रपौत्रैर्विहीना
तथा बन्धुभिः पितृभिर्भ्रातृभिश्च ।
कृतं कार्यं दुष्करं पाण्डवेयैः
प्राप्तं राज्यमसपत्नं पुनस्तैः ॥३१॥

## विदुरस्य सुभाषितानि

भावमिच्छन्ति सर्वस्य नाभावे कुरुते मनः ।
सत्यवादी मृदुर्दान्तो यः स उत्तमपूरुषः ।।१।।
नानर्थकं सान्त्वयति प्रतिज्ञाय ददाति च ।
रन्ध्रं परस्य जानाति यः स मध्यमपूरुषः ।।२।।
न श्रद्दधाति कल्याणं परेभ्योऽप्यात्मशङ्कितः ।
निराकरोति मित्राणि यो वै सोऽधमपूरुषः ।।३।।
आत्मज्ञानं समारम्भस्तितिक्षा धर्मनित्यता ।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ।।४।।
क्रोधो हर्षश्च दर्पश्च ह्रीः स्तम्भो मान्यमानिता ।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ।।५।।
यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे ।
कृतमेवास्य जानन्ति स वै पण्डित उच्यते ।।६।।
यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः ।
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ।।७।।
निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः ।
अबन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते ।।८।।
न हृष्यत्यात्मसम्माने नावमाने च तप्यते ।
गाङ्गो ह्रदः इवाक्षोभ्यो यः स पण्डित उच्यते ।।९।।
तत्त्वज्ञः सर्वभूतानां योगज्ञः सर्वकर्मणाम् ।
उपायज्ञो मनुष्याणां नरः पण्डित उच्यते ।।१०।।

यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते ।
न किञ्चिदवमन्यन्ते नराः पण्डितबुद्धयः ॥११॥
नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥१२॥
निषेवते प्रशस्तानि निन्दितानि न सेवते ।
अनास्तिकः श्रद्दधान एतत् पण्डितलक्षणम् ॥१३॥

क्षिप्रं विजानाति चिरं शृणोति
विज्ञाय चार्थं भजते न कामात् ।
नासंपृष्टो ह्युपयुङ्क्ते परार्थे
तत् प्रज्ञानं प्रथमं पण्डितस्य ॥१४॥

स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।
मिथ्याचरति मित्रार्थे यश्च मूढः स उच्यते ॥१५॥
अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥१६॥
संसारयति कृत्यानि सर्वत्र विचिकित्सते ।
चिरं करोति क्षिप्रार्थे स मूढो भरतर्षभ ॥१७॥
एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥१८॥
सोऽस्य दोषो न मन्तव्यः क्षमा हि परमं बलम् ।
क्षमा गुणो ह्यशक्तानां शक्तानां भूषणं क्षमा ॥१९॥
द्वे कर्मणी नरः कुर्वन्नस्मिन् लोके विरोचते ।
अब्रुवन् परुषं किञ्चिदसतो नार्चयंस्तथा ॥२०॥

पञ्चेन्द्रियस्य मर्त्यस्य छिद्रञ्चेदेकमिन्द्रियम् ।
ततोऽस्य स्रवति प्रज्ञा दृतेः पादादिवोदकम् ॥२१॥

आरोग्यमानृण्यमविप्रवासः
सद्भिर्मनुष्यैः सह संप्रयोगः ।
स्वप्रत्यया वृत्तिरभीतवासः
षड् जीवलोकस्य सुखानि राजन् ॥२२॥

ईर्ष्युर्घृणी नसन्तुष्टः क्रोधनो नित्यशङ्कितः ।
परभाग्योपजीवी च षडेते नित्यदुःखिताः ॥२३॥

सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः ।
प्रायशो यैर्विनश्यन्ति कृतमूला अपीश्वराः ॥
स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् ।
महच्च दण्डपारुष्यमर्थदूषणमेव च ॥२४-२५॥

दश धर्मं न जानन्ति धृतराष्ट्र निबोध तान् ।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ॥
त्वरमाणश्च भीरुश्च लुब्धः कामी च ते दश ।
तस्मादेतेषु सर्वेषु न प्रसज्येत पण्डितः ॥२६-२७॥

न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यमस्ति
न तत् सत्यं यच्छलेनाभ्युपेतम् ॥२८॥

यः पञ्चाभ्यन्तरान् शत्रूनविजित्य मनोमयान् ।
जिगीषति रिपूनन्यान् रिपवोऽभिभवन्ति तम् ॥२९॥

सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥३०॥
क्षमा वशीकृतिर्लोके क्षमया किं न साध्यते ।
शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः ॥३१॥
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ।
अक्षमावान् परं दोषैरात्मानं चैव योजयेत् ॥३२॥

अष्टौ गुणाः पुरुषं दीपयन्ति
प्रज्ञा च कौल्यञ्च दमः श्रुतञ्च ।
पराक्रमश्चाबहुभाषिता च
दानं यथाशक्ति कृतज्ञता च ॥३३॥

गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥३४॥
शीलं प्रधानं पुरुषे तद् यस्येह प्रणश्यति ।
न तस्य जीवितेनार्थो न धनेन न बन्धुभिः ॥३५॥
रोहते सायकैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥३६॥
श्रीर्मङ्गलात् प्रभवति प्रागल्भ्यात् सम्प्रवर्धते ।
दाक्ष्यात्तु कुरुते मूलं संयमात् प्रतितिष्ठति ॥३७॥
सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥३८॥
अक्रोधेन जयेत् क्रोधमसाधुं साधुना जयेत् ।
जयेत् कदर्यं दानेन जयेत् सत्यन चानृतम् ॥३९॥

---

## अर्जुनविषादः

अर्जुन उवाच—

दृष्ट्वेमान् स्वजनान् कृष्ण युयुत्सून् समवस्थितान् ।
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।।१।।

वेपथुश्च शरीरे मे रोमहर्षश्च जायते ।
गाण्डीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते ।।२।।

न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ।
निमित्तानि च पश्यामि विपरीतानि केशव ।।३।।

न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ।
न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।।४।।

किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ।
येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।।५।।

त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ।
आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।।६।।

मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा ।
एतान् न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।।७।।

अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ।
निहत्य धार्तराष्ट्रान् नः का प्रीतिः स्याज्जनार्दन ।।८।।

पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ।
तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ।।९।।

यद्यपेते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ।।१०।।

कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ।।११।।

कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ।।१२।।

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ।।१३।।

अहो बत महत् पापं कर्तुं व्यवसिता वयम् ।
यद् राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ।।१४।।

यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ।।१५।।

सञ्जय उवाच—

एवमुक्त्वार्जुनः संख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ।।१६।।

---

# विष्णुपुराणम्

## समुद्रमन्थनम्

पराशर उवाच—

दुर्वासाः शङ्करस्यांशश्चचार पृथिवीमिमाम् ।
स ददर्श स्रजं दिव्यामृषिर्विद्याधरीकरे ॥१॥
उन्मत्तव्रतधृग् विप्रस्तां दृष्ट्वा शोभनाँ स्रजम् ।
तां ययाचे वरारोहां विद्याधरवधूं ततः ॥२॥
याचिता तेन तन्वङ्गी मालां विद्याधराङ्गना ।
ददौ तस्मै विशालाक्षी सादरं प्रणिपत्य च ॥३॥
तामादायात्मनो मूर्ध्नि स्रजमुन्मत्तरूपधृक् ।
कृत्वा स विप्रो मैत्रेय परिबभ्राम मेदिनीम् ॥४॥
स ददर्श समायान्तम् उन्मत्तैरावतस्थितम् ।
त्रैलोक्याधिपतिं देवं सह देवैः शचीपतिम् ॥५॥
तामात्मनः स शिरसः स्रजमुन्मत्तषट्पदाम् ।
आदायामरराजाय चिक्षेपोन्मत्तवन्मुनिः ॥६॥
गृहीत्वामरराजेन स्रगैरावतमूर्धनि ।
न्यस्ता रराज कैलासशिखरे जाह्नवी यथा ॥७॥
मदान्धकारिताक्षोऽसौ गन्धाकृष्टेन वारणः ।
करेणाघ्राय चिक्षेप तां स्रजं धरणीतले ॥८॥
ततश्चुक्रोध भगवान् दुर्वासा मुनिसत्तमः ।
मैत्रेय देवराजं तं क्रुद्धश्चैतदुवाच ह ॥९॥

ऐश्वर्यमत्त दुष्टात्मन्नतिस्तब्धोऽसि वासव ।
श्रियो धाम स्रजं यस्त्वं मद्दत्तां नाभिनन्दसि ॥१०॥
प्रसाद इति नोक्तं ते प्रणिपातपुरःसरम् ।
हर्षोत्फुल्लकपोलेन न चापि शिरसा धृता ॥११॥
मया दत्तामिमां मालां यस्मान्न बहुमन्यसे ।
त्रैलोक्यश्रीरतो मूढ विनाशमुपयास्यति ॥१२॥
मद्दत्ता भवता यस्मात् क्षिप्ता माला महीतले ।
तस्मात् प्रनष्टलक्ष्मीकं त्रैलोक्यं ते भविष्यति ॥१३॥

पराशर उवाच—

महेन्द्रो वारणस्कन्धादवतीर्य त्वरान्वितः ।
प्रसादयामास तदा दुर्वाससम् अकल्मषम् ॥१४॥
प्रसाद्यमानः स तदा प्रणिपातपुरःसरम् ।
प्रत्युवाच सहस्राक्षं दुर्वासा मुनिसत्तमः ॥१५॥
नाहं कृपालुहृदयो न च मां भजते क्षमा ।
अन्ये ते मुनयः शक्र दुर्वाससम् अवेहि माम् ॥१६॥
ज्वलज्जटाकलापस्य भृकुटीकुटिलं मुखम् ।
निरीक्ष्य कस्त्रिभुवने मम यो न गतो भयम् ॥१७॥
नाहं क्षमिष्ये बहुना किमुक्तेन शतक्रतो ।
विडम्बनाम् इमां भूयः करोष्यनुनयात्मिकाम् ॥१८॥

पराशर उवाच—

इत्युक्त्वा प्रययौ विप्रो देवराजोऽपि तं पुनः ।
आरुह्यैरावतं ब्रह्मन् प्रययावमरावतीम् ॥१९॥

ततः प्रभृति निःश्रीकं सशक्रं भुवनत्रयम् ।
मैत्रेयासीदपध्वस्तं संक्षीणौषधिवीरुधम् ॥२०॥
एवमत्यन्तनिःश्रीके त्रैलोक्ये सत्त्ववर्जिते ।
देवान् प्रति बलोद्योगं चक्रुर्दैतेयदानवाः ॥२१॥
विजितास्त्रिदशा दैत्यैरिन्द्राद्याः शरणं ययुः ।
पितामहं महाभागं हुताशनपुरोगमाः ॥२२॥
यथावत् कथितो देवैर्ब्रह्मा प्राह ततः सुरान् ।
परापरेशं शरणं व्रजध्वमसुरार्दनम् ॥२३॥
एवमुक्त्वा सुरान् सर्वान् ब्रह्मा लोकपितामहः ।
क्षीरोदस्योत्तरं तीरं तैरेव सहितो ययौ ॥२४॥
स गत्वा त्रिदशैः सर्वैः समवेतः पितामहः ।
तुष्टाव वाग्भिरष्टाभिः परापरपतिं हरिम् ॥२५॥

पराशर उवाच—

ततः संस्तूयमानस्तु प्रणतैरमरैर्हरिः ।
प्रसन्नदृष्टिर्भगवानिदमाह स विश्वकृत् ॥२६॥

श्रीभगवानुवाच—

तेजसो भवतां देवाः करिष्याम्युपबृंहणम् ।
वदाम्यहं यत् क्रियतां भवद्भिस्तदिदं सुराः ॥२७॥
आनीय सहिता दैत्यैः क्षीराब्धौ सकलौषधीः ।
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा तु वासुकिम् ॥२८॥
मथ्यताममृतं देवाः सहाये मय्यवस्थिते ।
मथ्यमाने च तत्राब्धौ यत् समुत्पद्यतेऽमृतम् ॥२९॥

तत्पानाद् बलिनो यूयममराश्च भविष्यथ।
तथा चाहं करिष्यामि यथा त्रिदशविद्विषः।
न प्राप्स्यन्त्यमृतं देवाः केवलं क्लेशभागिनः ॥३०॥

पराशर उवाच—

इत्युक्ता देवदेवेन सर्व एव ततः सुराः।
सन्धानमसुरैः कृत्वा यत्नवन्तोऽमृतेऽभवन् ॥३१॥
नानौषधीः समानीय देवदैतेयदानवाः।
क्षिप्त्वा क्षीराब्धिपयसि शरदभ्रामलत्विषि ॥३२॥
मन्थानं मन्दरं कृत्वा नेत्रं कृत्वा च वासुकिम्।
ततो मथितुमारब्धा मैत्रेय तरसामृतम् ॥३३॥
विबुधाः सहिताः सर्वे यतः पुच्छं ततः कृताः।
कृष्णेन वासुकेर्दैत्याः पूर्वकाये निवेशिताः ॥३४॥
ते तस्य फणनिःश्वासवह्निनापहतत्विषः।
निस्तेजसोऽसुराः सर्वे बभूवुरमितद्युते ॥३५॥
मथ्यमाने ततस्तस्मिन् क्षीराब्धौ देवदानवैः।
हविर्धामाभवत् पूर्वं सुरभिः सुरपूजिता ॥३६॥
किमेतदिति सिद्धानां दिवि चिन्तयतां ततः।
बभूव वारुणी देवी मदाघूर्णितलोचना ॥३७॥
कृतावर्तात् ततस्तस्मात् क्षीरोदाद् वासयन् जगत्।
गन्धेन पारिजातोऽभूद् देवस्त्रीनन्दनस्तरुः ॥३८॥
रूपौदार्यगुणोपेतस्ततश्चाप्सरसां गणः।
क्षीरोदधेः समुत्पन्नो मैत्रेय परमाद्भुतः ॥३९॥

ततः शीतांशुरभवज् जगृहे तं महेश्वरः ।
जगृहुश्च विषं नागाः क्षीरोदाच्च समुथितम् ।।४०।।
ततः स्वस्थमनस्कास्ते सर्वे दैतेयदानवाः ।
बभूवुर्मुदिताः सर्वे मैत्रेय मुनिभिः सह ।।४१।।
ततः स्फुरत्कान्तिमती विकासिकमले स्थिता ।
श्रीर्देवी पयसस्तस्मादुत्थिता भृतपङ्कजा ।।४२।।
उद्वेगं परमं जग्मुर्दैत्या विष्णुपराङ्मुखाः ।
त्यक्ता लक्ष्म्या महाभाग विप्रचित्तिपुरोगमाः ।।४३।।
ततो धन्वन्तरिर्देवः श्वेताम्बरधरः स्वयम् ।
बिभ्रत् कमण्डलुं पूर्णममृतस्य समुत्थितः ।।४४।।
ततस्ते जगृहुर्दैत्या धन्वन्तरिकरे स्थितम् ।
कमण्डलुं महावीर्या यत्रास्ते तद् द्विजामृतम् ।।४५।।
मायया लोभयित्वा तान् विष्णुः स्त्रीरूपमास्थितः ।
दानवेभ्यस्तदादाय देवेभ्यः प्रददौ विभुः ।।४६।।
ततः पपुः सुरगणाः शक्राद्यास्तत् तदामृतम् ।
उद्यतायुधनिस्त्रिंशा दैत्यास्तांश्च समभ्ययुः ।।४७।।
पीतेऽमृते च बलिभिर्देवैर्दैत्यचमूस्तदा ।
वध्यमाना दिशो भेजे पातालं च विवेश वै ।।४८।।
तदा देवा मुदा युक्ताः शङ्खचक्रगदाभृतम् ।
प्रणिपत्य यथापूर्वमशासत त्रिविष्टपम् ।।४९।।

---

# कथासरित्सागरः

## जीमूतवाहनचरितम्

कृतोद्वाहस्ततस्तस्थौ तस्मिञ्न् जीमूतवाहनः ।
मलयाद्रौ महार्हेण विभवेन वधूसखः ॥१॥
एकदा च श्वशुर्येण स मित्रावसुना सह ।
वेलावनानि जलधेरवलोकयितुं ययौ ॥२॥
तत्रापश्यच्च पुरुषं युवानं विग्नमागतम् ।
निवर्तयन्तं जननीं हा पुत्रेति विराविणीम् ॥३॥
अपरेण परित्यक्तं भटेनेवानुयायिना ।
पुरुषेण पृथूत्तुङ्गं प्रापय्यैकं शिलातलम् ॥४॥
कस्त्वं किमीहसे किञ्च माता त्वां शोचतीति तम् ।
स पप्रच्छ ततः सोऽपि तस्मै वृत्तान्तमब्रवीत् ॥५॥
पुरा कश्यपभार्ये द्वे कद्रूश्च विनता तथा ।
मिथः कथाप्रसङ्गेन विवादं किल चक्रतुः ॥६॥
आद्या श्यामान् रवेरश्वानवादीदपरा सितान् ।
अन्योऽन्यदासभावञ्च पणमत्र बबन्धतुः ॥७॥
ततो जयार्थिनी कद्रूः स्वैरं नागैर्निजात्मजैः ।
विषफुत्कारमलिनानर्कस्याश्वानकारयत् ॥८॥
तादृशांश्चोपदर्श्य तान् विनतां छद्मना जिताम् ।
दासीचकार कष्टा हि स्त्रीणामन्यासहिष्णुता ॥९॥

तद् बुद्ध्वागत्य विनतातनयो गरुडस्तदा ।
सान्त्वेन मातुर्दासत्वमुक्तिं कद्रूमयाचत ।।१०।।
ततः कद्रूसुता नागा विचिन्त्यैवं तमब्रुवन् ।
भो वैनतेय! क्षीराब्धिः प्रारब्धो मथितुं सुरैः ।।११।।
ततः सुधां समाहृत्य प्रतिवस्तु प्रयच्छ नः ।
मातरं स्वीकुरुष्वाथ भवान् हि बलिनां वरः ।।१२।।
एतन्नागवचः श्रुत्वा गत्वा च क्षीरवारिधिम् ।
सुधार्थं दर्शयामास गरुडो गुरु पौरुषम् ।।१३।।
ततः पराक्रमप्रीतो देवस्तत्र स्वयं हरिः ।
तुष्टोऽस्मि ते वरं कञ्चिद् वृणीष्वेत्यादिदेश तम् ।।१४।।
नागा भवन्तु मे भक्ष्या इति सोऽपि हरेस्ततः ।
वैनतेयो वरं वव्रे मातुर्दास्येन कोपितः ।।१५।।
तथेति हरिणादिष्टो निजवीर्यजितामृतः ।
सुधाकलशमादाय तार्क्ष्यो नागानुपाययौ ।।१६।।
वरप्रभावभीतांश्च मुग्धानाराज्जगाद तान् ।
इदमानीतममृतं मुक्त्वाम्बां मम गृह्यताम् ।।१७।।
भयं चेत् स्थापयाम्येतदहं वो दर्भसंस्तरे ।
उन्मोच्याम्बां च गच्छामि स्वीकुरुध्वमितः सुधाम् ।।१८।।
दास्यमुक्तां च कृत्वैवं मातरं गरुडे गते ।
यावदाददते नागा निःशङ्कास्तत् किलामृतम् ।।१९।।
तावन्निपत्य सहसा तान् विमोह्य स्वशक्तितः ।
तं सुधाकलशं शक्रो जहार कुशसंस्तरात् ।।२०।।

अथालब्धामृतरसान् नागान् वैरी हरेर्वरात् ।
तार्क्ष्यः प्रववृते भोक्तुं तान्निपत्य पुनः पुनः ॥२१॥
तं दृष्ट्वा चान्वहं तत्र वासुकिर्भुवनेश्वरः ।
समयं प्रार्थनापूर्वं चकारैवं गरुत्मतः ॥२२॥
एकमेकं प्रतिदिनं नागं ते प्रेषयाम्यहम् ।
आहारहेतोः पक्षीन्द्र ! पयोधिपुलिनाचले ॥२३॥
इति वासुकिना प्रोक्तस्तथेति गरुडोऽन्वहम् ।
तत्प्रेषितमिहैकैकं नागं भोक्तुं प्रचक्रमे ॥२४॥
तेन क्रमेण चासंख्या फणिनोऽत्र क्षयं गताः ।
अहञ्च शङ्खचूडाख्यो नागो वारो ममाद्य च ॥२५॥
इति तस्य वचः श्रुत्वा शङ्खचूडस्य दुःखितः ।
सान्तःखेदः स जीमूतवाहनस्तमभाषत ॥२६॥
अहो किमपि निःसत्त्वं राजत्वं बत वासुकेः ।
यत् स्वहस्तेन नीयन्ते रिपोरामिषतां प्रजाः ॥२७॥
उत्पद्य कश्यपात् पापं तार्क्ष्योऽपि कुरुते कियत् ।
देहमात्रकृते मोहः कीदृशो महतामपि ॥२८॥
तदहं तावदद्यैकं रक्षामि त्वां गरुत्मतः ।
स्वशरीरप्रदानेन मा विषादं कृथाः सखे ॥२९॥
तच्छ्रुत्वा शङ्खचूडोऽपि धैर्यादिततदुवाच तम् ।
शान्तमेतन्महासत्त्व मास्मैवं भाषथाः पुनः ॥३०॥
न काचस्य कृते जातु युक्ता मुक्तामणेः क्षतिः ।
न चाप्यहं गमिष्यामि कथां कुलकलङ्किताम् ॥३१॥

इत्युक्त्वा तं निषिध्यैव साधुर्जीमूतवाहनम् ।
मत्वा गरुडवेलां च स क्षणान्तरगामिणीम् ॥३२॥
शङ्खचूडो ययौ तत्र वारिधेस्तीरवर्तिनम् ।
अन्तकाले नमस्कर्तुं गोकर्णाख्यमुमापतिम् ॥३३॥
गते तस्मिन् स कारुण्यनिधिर्जीमूतवाहनः ॥
तत्त्राणायात्मदानेन बुबुधे लब्धमन्तरम् ॥३४॥
ततस्तद् विस्मृतमिव क्षिप्रं कृत्वा स्वयुक्तितः ।
कार्यापदेशाद् व्यसृजन्निजं मित्रावसुं गृहम् ॥३५॥
तत्क्षणं च समासन्नतार्क्ष्यपक्षानिलाहता ।
तत्सत्त्वदर्शनाश्चर्यादिव सा भूरघूर्णत ॥३६॥
तेनाहिरिपुमायान्तं मत्वा जीमूतवाहनः ।
परानुकम्पी तां वध्यशिलामध्यारुरोह सः ॥३७॥
क्षणाच्चात्र निपत्यैव महासत्त्वं जहार तम् ।
नीत्वा भक्षयितुं चैनमारेभे शिखरे गिरेः ॥३८॥
तत्कालं पुष्पवृष्टिश्च निपपात नभस्तलात् ।
तद्दर्शनाच्च किं न्वेतदिति तार्क्ष्यो विसिष्मिये ॥३९॥
तावत् स शङ्खचूडोऽत्र नत्वा गोकर्णमागतः ।
ददर्श रुधिरासारसिक्तं वध्यशिलातलम् ॥४०॥
हा धिङ्मदर्थे तेनात्मा दत्तो नूनं महात्मना ।
तत् कुत्र नीतस्तार्क्ष्येण क्षणेऽस्मिन् स भविष्यति ॥४१॥
अन्विष्यामि द्रुतं तावत् कदाचित् तमवाप्नुयाम् ।
इति साधुः स तद्रक्तधारामनुसरन् ययौ ॥४२॥

तत्रान्तरे च हृष्टं तं दृष्ट्वा जीमूतवाहनम् ।
गरुडो भक्षणं मुक्त्वा सविस्मयमचिन्तयत् ॥४३॥
कश्चित् किमन्य एवायं भक्ष्यमाणोऽपि यो मया ।
विपद्यते न तु परं धीरः प्रत्युत हृष्यति ॥४४॥
इत्यन्तर्विमृशन्तं च तार्क्ष्यं तादृग्विधोऽपि सः ।
निजगाद निजाभीष्टसिद्ध्यै जीमूतवाहनः ॥४५॥
पक्षिराज ! ममास्त्वेव शरीरे मांसशोणितम् ।
तदकस्मादतृप्तोऽपि किं निवृत्तोऽसि भक्षणात् ॥४६॥
तच्छ्रुत्वाश्चर्यवशगस्तं स पप्रच्छ पक्षिराट् ।
नागः साधो ! न तावत्त्वं ब्रूहि तत् को भवानिति ॥४७॥
नाग एवास्मि भुङ्क्ष्व त्वं यथारब्धं समापय ।
आरब्धा ह्यसमाप्तैव किं धीरैस्त्यज्यते क्रिया ॥४८॥
इति यावच्च जीमूतवाहनः प्रतिवक्ति तम् ।
तावत् स शङ्खचूडोऽत्र प्राप्तो दूरादभाषत ॥४९॥
मा मा गरुत्मन्नैवैष नागो नागो ह्यहं तव ।
तदेनं मुञ्च कोऽयं ते जातोऽकाण्डे बत भ्रमः ॥५०॥
तच्छ्रुत्वातीव विभ्रान्तो बभूव स खगेश्वरः ।
वाञ्छितासिद्धिखेदञ्च भेजे जीमूतवाहनः ॥५१॥
अहो बत नृशंसस्य पापमापतितं मम ।
किं वा सुलभपापा हि भवन्त्युन्मार्गवृत्तयः ॥५२॥
श्लाघ्यस्तेष महात्मैकः परार्थप्राणदायिना ।
ममेति मोहैकवशं येन विश्वमधः कृतम् ॥५३॥

इति तं चिन्तयन्तं च गरुडं पापशुद्धये ।
वह्नि विविक्षुं जीमूतवाहनोऽथ जगाद सः ।।५४।।
पक्षीन्द्र ! किं विषण्णोऽसि सत्यं पापाद् बिभेषि चेत् ।
तदिदानीं न भूयस्ते भक्ष्या हीमे भुजङ्गमाः ।।५५।।
कार्यश्चानुशयस्तेषु पूर्वभुक्तेषु भोगिषु ।
एषोऽत्र हि प्रतीकारो वृथान्यच्चिन्तितं तव ।।५६।।
इत्युक्तस्तेन स प्रीतस्तार्क्ष्यो भूतानुकम्पिना ।
तथेति प्रतिपेदे तद् वाक्यं तस्य गुरोरिव ।।५७।।
ततश्च साक्षादागत्य देव्या सिक्तोऽमृतेन सः ।
जीमूतवाहनो गौर्या तद्भार्याभक्तितुष्टया ।।५८।।
तेनाधिकतरोद्भूतकान्तीन्यङ्गानि जज्ञिरे ।
तस्य सानन्दगीर्वाणदुन्दुभिध्वनिभिः सह ।।५९।।
ततोऽक्षयेण देहेन यशसा च विराजितम् ।
बुद्ध्वाभ्यनन्दत् तं बन्धुजनो जीमूतवाहनम् ।।६०।।

---

## सूक्तिरत्नावली

अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य च सञ्चयम् ।
अवन्ध्यं दिवसं कुर्याद् दानाध्ययनकर्मभिः ।।१।।
चलच्चित्तं चलद्वित्तं चलज्जीवनयौवनम् ।
चलाचलमिदं सर्वं कीर्तिर्यस्य स जीवति ।।२।।

अलब्धं चैव लिप्सेत लब्धं रक्षेदवेक्षया ।
रक्षितं बर्धयेन्नित्यं वृद्धं तीर्थेषु निक्षिपेत् ।।३।।
उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ।।४।।
दुर्जनः प्रियवादी च नैतद् विश्वासकारणम् ।
मधु तिष्ठति जिह्वाग्रे हृदये तु हलाहलम् ।।५।।
दुर्जनः परिहर्तव्यो विद्ययालंकृतोऽपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयंकरः ।।६।।
सर्पः क्रूरः खलः क्रूरः सर्पात् क्रूरतरः खलः ।
मन्त्रौषधिवशः सर्पः खलः केन निवार्यते ।।७।।
सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम् ।
अहार्यत्वादनर्घत्वादक्षयत्वाच्च सर्वदा ।।८।।
अपूर्वः कोऽपि भाण्डारस्तव भारति दृश्यते ।
व्ययतो वृद्धिमायाति क्षयमायाति सञ्चयात् ।।९।।

विद्या विवादाय धनं मदाय
शक्तिः परेषां परिपीडनाय ।
खलस्य साधोर्विपरीतमेतद्
ज्ञानाय दानाय च रक्षणाय ।।१०।।

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थी नोपपद्यते ।।११।।
अलसस्य कुतो विद्या अविद्यस्य कुतो धनम् ।
अधनस्य कुतो मित्रम् अमित्रस्य कुतः सुखम् ।।१२।।

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥१३॥
गुरून् कुर्वन्ति ते वंश्यान् अन्वर्था तैर्वसुन्धरा ।
येषां यशांसि शुभ्राणि ह्रेपयन्तीन्दुमण्डलम् ॥१४॥
स पुमानर्थवज्जन्मा यस्य नाम्नि पुरःस्थिते ।
नान्यामङ्गुलिमभ्येति संख्यायामुद्यताङ्गुलिः ॥१५॥
अधमा धनमिच्छन्ति धनमानौ च मध्यमाः ।
उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥१६॥
शक्तिवैकल्यनम्रस्य निःसारत्वाल्लघीयसः ।
जन्मिनो मानहीनस्य तृणस्य च समा गतिः ॥१७॥
तरवोऽपि हि जीवन्ति जीवन्ति च मनीषिणः ।
स जीवति मनो यस्य मननेन हि जीवति ॥१८॥
प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः ।
तस्मात् तदेव वक्तव्यं वचने का दरिद्रता ॥१९॥
अतिदर्पे हता लङ्का अतिमाने च कौरवाः ।
अतिदाने बलिर्बद्धः सर्वमत्यन्तगर्हितम् ॥२०॥
कृपणेन समो दाता भुवि कोऽपि न विद्यते ।
अनश्नन्नेव वित्तानि यः परेभ्यः प्रयच्छति ॥२१॥
सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।
एतद् विद्यात् समासेन लक्षणं सुखदुःखयोः ॥२२॥
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥२३॥

यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्तते ॥२४॥
विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥२५॥
उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥२६॥
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥२७॥
मन्त्रे तीर्थे द्विजे देवे दैवज्ञे भेषजे गुरौ ।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी ॥२८॥
जले तैलं खले गुह्यं पात्रे दानं मनागपि ।
प्राज्ञे शास्त्रं स्वयं याति विस्तारं वस्तुशक्तितः ॥२९॥
पुस्तकस्था तु या विद्या परहस्तगतं धनम् ।
कार्यकाले समुत्पन्ने न सा विद्या न तद्धनम् ॥३०॥
सर्वाः सम्पत्तयस्तस्य सन्तुष्टं यस्य मानसम् ।
उपानद्गूढपादस्य ननु चर्मावृतेव भूः ॥३१॥
चिन्तनीया हि विपदामादावेव प्रतिक्रिया ।
न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ॥३२॥
सुखमापतितं सेव्यं दुःखमापतितं तथा ।
चक्रवत् परिवर्तन्ते दुःखानि च सुखानि च ॥३३॥
उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥३४॥

गौरवं प्राप्यते दानान्न तु वित्तस्य सञ्चयात् ।
स्थितिरुच्चैः पयोदानां पयोधीनामधः स्थितिः ।।३५।।
हे दारिद्र्य ! नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः ।
पश्याम्यहं जगत् सर्वं न मां पश्यति कश्चन ।।३६।।
शास्त्राण्यधीत्यापि भवन्ति मूर्खा
यस्तु क्रियावान् पुरुषः स विद्वान् ।
सुचिन्तितं चौषधमातुराणां
न नाममात्रेण करोत्यरोगम् ।।३७।।

---

# गीताञ्जलिः

## स्पर्शमणिः

साधुः सनातन इति प्रथितः पृथिव्यां
वृन्दावने चिरमुवास तपस्यमानः ।
ध्यानैकतानमनसं तमुपेत्य दीन-
वेशो द्विजश्चरणयोरनमत् कदाचित् ।।१।।
स्निग्धेक्षणेन तमवेक्ष्य स साधुरूचे
त्वं कोऽसि भूसु र कुतः किमिहागतोऽसि ।
नष्टाध्वखेद इव तन्मधुरस्वरेण
तं प्रत्यभाषत शनैरवनीसुरोऽपि ।।२।।

स्थानान्यनेकगिरिकाननसंकुलानि
दूरादतीत्य तव पादमुपागतोऽस्मि ।
मां 'वर्धमान'गत'मानकरा'धिवासं
जानीहि 'जीवन' इति क्षतभागधेयम् ।।३।।

विद्वत्कुले यजनदानतपःपवित्रे
जातोऽस्मि सम्प्रति तु भाग्यविपर्ययेण ।
कीर्त्या सहास्तमगमत् सकलं ततश्च
जीवन्मृतस्य मम नास्ति भुवि द्वितीयः ।।४।।

दैन्येन तेन वनमेत्य सुदुश्चरेण
सन्तोषितः पशुपतिस्तपसादरेण ।
रूपं निजं स परिगृह्य निशावसाने
स्वप्नेऽथ मामुपदिदेश भवो भवाय ।।५।।

वृन्दावनेऽधियमुनातटिनीतटान्तं
साधुं सनातनमुपेहि तपश्चरन्तम् ।
सेवस्व तत्पदयुगं स हि ते प्रसन्नः
सम्पूरयिष्यति मनोरथमाशु वत्स ।।६।।

श्रुत्वा वचोऽद्भुतमिदं मनसाकुलेन
सोऽचिन्तयत् किमिव नाम धनं ममास्ति ।
आसीद् गृहे यदपि किञ्चन दानयोग्यं
त्यक्त्वागतस्तदखिलं त्विह भैक्ष्यसारः ।।७।।

दूरेऽस्य विस्मृतिरगात् सहसा ततश्च
साधुः प्रफुल्लवदनो मनसा बभाषे ।

सत्यं स्मरामि पुलिने भ्रमता कदाचित्
स्पर्शादिनाममरिणमेकमिहैव लब्धम् ।।८।।
याचेत कश्चिदिह यद्यपि देयमेतद्
रत्नं तदेति सिकतान्तरिहैव गूढम् ।
निर्दिश्य चाथ विततङ्गुलिना करेण
सद्योग्रहाय पुनरस्य तमादिदेश ।।९।।
विप्रोऽप्युपेत्य सिकता अपसार्यं तूर्णं
रत्नं विकासिवदनः स तदुद्दधार ।
आश्चर्यमायसममुष्य कराङ्गरीयं
स्पर्शान्मणेः सपदि काञ्चनतामवाप ।।१०।।
विप्रस्तु विस्मयभरादवशाङ्गयष्टि-
रासाम्बभूव पुलिनोपरि विह्वलात्मा ।
संमन्त्रितः किमवहत् स ललाटरेखां
नद्या कलध्वनिमिषेण पुरो वहन्त्या ।।११।।
क्लान्तोऽरुणश्च दिवसाध्वपरिश्रमेण
पारेनदं रविरियाय शनैरथास्तम् ।
उत्थाय सोऽपि पदयोः प्रणिपत्य साधो-
रश्रुप्लुतेन वदनेन पुनस्तमूचे ।।१२।।
भूत्वाग्रणीर्धनवतां द्रविणेन येन
नैतादृशानपि मणीन् गणयस्युदारान् ।
तस्यैव कञ्चन लवं कुरु मे प्रसाद-
मित्यक्षिपत् पयसि दूरतरे मणिं सः ।।१३।।

———

## दधीचेरात्मदानम्

पुरा किल स्वर्गपुरं सुरम्यं
पुरन्दरे शासति लोकवन्द्ये ।
दैत्यो दुरन्तो दिवि वृत्रनामा
समुत्थितोऽभूदिव धूमकेतुः ॥१॥
यदा स रुद्राकृतितिरुद्यतास्त्रो
वृत्रः प्रवृत्तो विबुधान् विरोद्धुम् ।
नाके स्वतः शान्तिनिकेतनेऽपि
मर्त्या इवार्ता अमरास्तदासन् ॥२॥
दुश्चिन्तया सन्ततयाभिभूताः
शोच्याः पिशाच्याकुलिता इवामी ।
अनन्यगत्या जगतां शरण्यं
नारायणं कारुणिकं प्रपन्नाः ॥३॥
शेषाहिशायी भगवान् मुकुन्दः
कुन्दद्युतिं दन्तरुचिं वितन्वन् ।
उवाच देवान्—न विषीदत श्री-
राश्रीयतां सत्वरमात्मकृत्या ॥४॥
का सा कृतिर्गच्छत विप्रवर्यं
दधीचिनामानमनीचकामम् ।
तदस्थिभिः शस्त्रमतीव भीमं
नाम्ना हि वज्रं सृजताधुनैव ॥५॥

वृत्रस्य पाषाणकठोरकण्ठ-
च्छेदाय शक्तं किल वज्रमेकम् ।
योग्यास्त्रसन्धानमृते हि बन्ध्या
भवेदभीष्टेषु जिगीषुचेष्टा ॥६॥

तथाकथान्ते विरते च विष्णौ
नमो विधायाथ विरोधितास्ते ।
द्रुतं दधीचेर्द्विजकुञ्जरस्य
ययुस्तपःकुञ्जमतीव मञ्जुम् ॥७॥

ते फुल्लवल्लीतरुगुल्ममध्ये
शिलातले तत्र विराजमानम् ।
योगासनासीनमदीनसत्त्वं
समाधिलीनं ददृशुर्दधीचिम् ॥८॥

तदा तदभ्यागतवृन्दपूजा-
विधित्सयेवाशु चलत्समाधिः ।
दधीचिरुन्मील्य दृशावपश्यत्
पुरन्दरादीन् पुरतोऽतिदीनान् ॥९॥

प्रियं ब्रुवाणो म्रियमाणकान्ती-
नभ्यर्थयामास मुनिः स देवान् ।
ते चाविलम्बं विबुधा दधीचिं
ययाचिरे देहमरेर्वधाय ॥१०॥

वृत्रस्य वृत्तं च हरेर्निदेशं
स शुश्रुवान् अश्रुचयप्लुतानाम् ।

दिवौकसामाननतो न मेने
स्वदेहनाशादपि दुःखलेशम् ।।११।।
सानन्दमान्दोलितकन्धरोऽसौ
तदीयवाचं मनसाभिनन्द्य ।
सन्देहदोलायितलोलचित्तां-
स्तान् सान्त्वयन् शान्तमिदं बभाषे ।।१२।।
अहो अहेतुर्महती दया वो
जातोदया मादृशि दीनमर्त्ये ।
यदस्थिमांसैकधनं भवन्तो
हरेः प्रियं कर्तुमबोधयन् माम् ।।१३।।
इति ब्रुवाणो मुनिरासनस्थः
समाधियोगेन जहन्निजासून् ।
आशु स्वदेहं तरुकाण्डकल्पं
सम्पातयामास पुरः सुराणाम् ।।१४।।
धन्येति धन्येति रवानुसारी
बभूव सद्यः कुसुमप्रवर्षः ।
सुराश्च वृत्रस्य वधे स्थिराशाः
प्रतस्थिरे विस्मयहर्षनम्राः ।।१५।।

———

# टिप्पनी

## तैत्तिरीयोपनिषत्

कृष्णयजुर्वेदीयेयमुपनिषत् । शीक्षावल्या एकादशेऽनुवाके अधीतवेदं शिष्यं प्रति गुरोरनुशासनमुनिबद्धम् । ततः संकलितोऽयमाचार्योपदेशः । विश्वविद्यालयादिषु अद्यतनीयसमावर्तनोत्सवेषु क्वचित् क्वचित् अस्य व्यवहार इदानीमपि दृश्यते ।

## मध्यमव्यायोगः

कालिदासादपि प्राचीनेन महाकविना भासेन त्रयोदश दृश्यकाव्यानि रचितानि । तेषु मध्यमव्यायोगः अन्यतमदृश्यकाव्यम् एकाङ्कम् । तस्यायं वस्तुसंक्षेपः ।

कदाचित् सदारापत्यः कश्चिद् वृद्धो ब्राह्मणो घटोत्कचेन भीमसेनसूनुना रुद्धः । स्वमातुर्हिडिम्बायाः पारणार्थं "त्रिषु पुत्रेषु एकं देही"ति तेनोक्तो द्वितीयं पुत्रं मध्यमनामानं स तत्याज । अथ पिपासाप्रतिकाराय अदूरवर्तिनं जलाशयं गतश्चिरायमाणः कालातिक्रमशङ्कया "भो मध्यम ! शीघ्रमागच्छ" इति उच्चैरसकृद् राक्षसेन स आहूतः । ततः पाण्डवमध्यमो भीम आत्मानमेव मध्यमनाम्नाहूयमानं विचिन्त्य तत्स्थानं प्राप्तः वृद्धेनाभयं याचितः । ततो भीमो "अहमेव अनुगमिष्यामी"ति प्रतिज्ञाय ब्राह्मणपुत्रं मध्यमं राक्षसान्मोचयामास । अनन्तरं पितरं भीमसेनम् अजानन् तेन सह विवदमानो घटोत्कचस्तं जनन्या हिडिम्बाया अन्तिकं नीतवान् ।

## पञ्चतन्त्रम्

आख्यानमुखेन नीतिशास्त्रं व्याचिख्यासुः पञ्चतन्त्राख्यो ग्रन्थो बहोः कालात् प्राच्येषु पाश्चात्त्येषु च देशेषु परां प्रसिद्धिमाप्तः । सार्धसहस्र-

वर्षेभ्यः पूर्वं पह्लवीभाषायामस्यानुवादः कृतः। ततश्च क्रमेण विभिन्नासु प्राच्यपाश्चात्त्यदेशीयभाषास्वस्य विपरिणमनं सञ्जातम्। लोकेषु बहुलप्रचारादस्य कालेनैवं परिवर्तनं जातं यथास्य मूलरूपोद्धरणं सुदुष्करमेवासीत्। भूयसा प्रयासेन केनचित् पाश्चात्त्यविदुषा कार्यमेतत् सम्पादितम्।

## हितोपदेशः

पञ्चतन्त्रादीन् ग्रन्थानुपजीव्यार्वाचीने काले नारायणो नाम कश्चित् विद्वान् हितोपदेशं नाम ग्रन्थं प्रणिनाय। उक्तं च तेन ग्रन्थारम्भे—

यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत्।
कथाच्छलेन बालानां नीतिस्तदिह कथ्यते॥
मित्रलाभः सुहृद्भेदो विग्रहः सन्धिरेव च।
पञ्चतन्त्रात्तथान्यस्माद् ग्रन्थादाकृष्य लिख्यते॥

## शिबिजातकम्

बौद्धाचार्य-श्रीमदार्यशूरकृताया हार्वर्ड ओरियेण्टल सिरिज् इत्याख्यग्रन्थमालायां प्रकाशं नीताया जातकमालाया द्वितीयं जातकं शिबिजातकमिति। अत्रत्यं शिबिविषयकमाख्यानं बौद्धशास्त्रे प्रसिद्धं पुराणेष्वनुपलब्धं सुतरां कौतुकावहम्। आर्यशूरस्य भाषा दृढसंबद्धा साहित्यसौन्दर्यमयी च।

## प्रबन्धकोषः

प्रख्यातजैनाचार्य-श्रीराजशेखरसूरिकृतस्य चतुर्विंशतिप्रबन्धापरनामधेयस्य सिंघी-जैनग्रन्थमालायाः षष्ठमणिरूपस्य प्रबन्धकोषस्य षोडशः प्रबन्धो वङ्कचूलप्रबन्धः इति। तत्र प्रबन्धस्य परिचयनिरूपणप्रसङ्गेनोक्तं ग्रन्थकृता ग्रन्थारम्भे—श्रीऋषभादिवर्धमानान्तानां जिनानां चक्र्यादीनां राज्ञाम् ऋषीणां चार्यरक्षितान्तानां वृत्तानि चरितानि उच्यन्ते। तत्पश्चात्कालभाविनां तु नराणां वृत्तानि प्रबन्धा इति।

## द्वात्रिंशत्पुत्तलिका

सिंहासनद्वात्रिंशिकेत्यपरनामधेया विक्रमादित्यनरपतेरलौकिककीर्ति-कलापवर्णनाख्यानपूर्णा द्वात्रिंशत्पुत्तलिका वङ्गीयादिष्वाधुनिकभाषास्वपि सुतरां परिचिता। तत्र चतुर्थोपाख्यानं कृतज्ञतापरीक्षणम्। तदिदं संक्षिप्य पुस्तके सन्निवेशितम्।

## वेतालपञ्चविंशतिः

द्वात्रिंशत्पुत्तलिकायामिवात्रापि विक्रमादित्यनरपतेराख्यानानि वर्णितानि। वेतालविक्रमादित्यसंवादरूपाण्यत्र आख्यानानीति विशेषः। एतान्यपि आधुनिकभाषासु प्रसिद्धान्येव। तत्र विंशतितमी कथा यज्ञसोमकथा।

## भोजप्रबन्धः

धाराधिपतेर्भोजराजस्य पण्डितानुगुण्यं दानशौण्डत्वञ्चावलम्ब्य प्रचलिता बहवः कथा अत्र ग्रन्थे उपनिबद्धा वर्तन्ते। यद्यपि सर्वास्ता अवितथा इति वक्तुं नालम्भवामस्तथापि तासां कौतुकावहत्वे न कापि विप्रतिपत्तिः।

## पुरुषपरीक्षा

सुविश्रुतनामधेयानां वैष्णवकवीनां श्रीविद्यापतिपादानां संस्कृतवाङ्मयी कृतिरियं पुरुषपरीक्षा नाम। ग्रन्थप्रयोजनमेवमभिहितं ग्रन्थारम्भे ग्रन्थकृता—

शिशूनां सिद्ध्यर्थं नयपरिचितेर्नूतनधियां
मुदे पौरस्त्रीणां सकलकविताकौतुकजुषाम्।
निदेशान्निःशङ्कं सपदि शिवसिंहक्षितिपतेः।
कथानां प्रस्तावं विरचयति विद्यापतिकविः।

तत्र त्रयोविंशी कथा हासविद्यकथेति। हासविद्यलक्षणं यथा—

हासेन विद्यया यस्तु प्रभोर्भवति वल्लभः।
विकृताङ्गवचःकृत्यैर्हासविद्यः स उच्यते॥

## मिवारप्रतापम्

अस्माकं गौरवभूता देवभाषा न केवलं प्राचीने काल एव प्रचरद्रूपासीत् । अद्यत्वेऽपि बहवो विद्वांसः संस्कृतभाषया विविधान् ग्रन्थान् विरचयन्ति । तेषां निदर्शनरूपेण केचिदंशा अत्र समुद्ध्रियन्ते। मिवारप्रतापं नाम नाटकं प्रसिद्धेतिहासकथाश्रितं विविधकाव्यनाटकादिग्रन्थविरचयितुर्महा-महोपाध्यायविरुदभाजः श्रीहरिदाससिद्धान्तवागीशमहोदयस्य कृतिः ।

## माणवकगौरवम्

माणवकगौरवं नाम महामहोपाध्याय-श्रीकालीपदतर्काचार्यस्यानेक-काव्यनाटकादिग्रन्थरचयितुरिदानीमप्यमुद्रितं नाटकम् । तत्र चतुर्थाङ्कस्या-यमंशविशेषः । ऋषेरायोदधौम्यस्य त्रयो मुख्याः शिष्याः कात्यायन आरुणि-रुपमन्युश्चेति । भक्तिपरीक्षणाय केदारखण्डं विदार्य क्षेत्रे प्रविशतः सलि-लस्य निरोधाय गुरुणा समादिष्ट आरुणिः स्वं कायं तत्र पातयित्वा कथमपि जलं वारयामास । गुर्वादेशादेव दूरकानने कुसुमानि चिन्वन् भुजङ्गेन दष्टः श्रीगुरुभक्तिप्रभावादुपगतेन धन्वन्तरिणा विषविकारान्मोचितः । उपमन्यु-रपि स्वीयवृत्तिकल्पने सर्वतः प्रतिषिद्धः केवलेन जीर्णार्कपत्रेण स्वां वृत्तिं कल्पयन्नन्धतामुपागतः श्रीगुरुनिदेशेन समाराधिताभ्यामश्विनीकुमाराभ्या-मनुकम्पया भूयो दृष्टिशक्तिं लम्भितः । श्रीगुरोः कृपया त्रयाणामेव तेषा-मन्ते प्रतिभान्ति स्म सर्वाः सरहस्या विद्याः । गुरुद्वेषी चापरः शिष्यो हारीतो नाम गुरुद्वेषात् कुष्ठव्याधिपरीतः कथमप्यन्ते गुरुकृपयैव रोगान्मुक्तिं लब्ध-वान् इति 'माणवकगौरवं' रूपकस्य समग्रो वृत्तसंक्षेपः ।

## पादुकाग्रहणम्

एकदा स्नानार्थं नदीं तमसां गतेन ऋषिणा वाल्मीकिना व्याधशरेण विध्यमानं क्रौञ्चमवलोक्य विलपन्तीं क्रौञ्चीं पश्यता महद् दुःखमनुभूतम् । तस्य शोकः श्लोकरूपेण परिणतः । तदानीं स ब्रह्मण आदेशेन रामचरितं विरचितवान् । रामायणमिति महाकाव्यं सप्तकाण्डात्मकम् ।

पितृवाक्यं मिथ्या भवितुं नार्हतीति वनगमने दृढमतिं रामचन्द्रं भरतः पादुके याचितवान्। तयो राज्यतन्त्रं न्यस्य भरतो दीर्घाणि चतुर्दश वर्षाणि नगराद् वहिः व्रतं परिपालयन्नतिष्ठत्। अयोध्याकाण्डस्य द्वादशाधिकशततमे सर्गे वृत्तान्तोऽयं समुपलभ्यते।

श्लोकः ३ इच्छामहे—अत्रात्मनेपदमार्षम्।

,, १२ स्वजा—स्वाभाविकी। वैनयिकी—शिक्षाजन्या।

,, १६ प्रतिपच्चन्द्रदर्शनम्—द्वितीयाचन्द्रदर्शनमित्यर्थः प्रतिपदि चन्द्रस्यादर्शनात्।

,, १७ योगक्षेमम्—अप्राप्तप्रापणं योगः क्षेमो लब्धस्य रक्षणम्।

,, २३ मा रोषं कुरु—'मा' 'माङ' चेत्यव्ययद्वयम्। माङि लुङ् भवति। अत्र मा इति अव्ययम्। तद्योगे लुङ्-विधानाभावाल्लोट्।

## शक्त्याहते लक्ष्मणे रामस्य खेदस्तस्य समाश्वावनञ्च

लक्ष्मणेन निहते मेघनादे क्रुद्धस्य रावणस्य शक्त्याघातेन पतितस्य लक्ष्मणस्य ओषधिप्रयोगेण नैरुज्यं वर्णितमस्ति रामायणस्य युद्धकाण्डे।

रामो रावणप्रयुक्तायाः शक्त्या आघातेन लक्ष्मणं भुवि निपतितं दृष्ट्वा तस्य मृत्युशङ्कया शोकेन सुषेणादीनां पुरो बहुधा विललाप। सुषेणो लक्ष्मणं निपुणं परीक्ष्य हेतूपन्यासपूर्वकं सप्राण एव लक्ष्मण इति रामं समाश्वासयन् विशल्यकरण्यादीनामोषधीनाम् आनयनाय हनूमन्तं गन्धमादनं नाम पर्वतं प्रेरितवान्।

श्लोकः ४ प्राणैः—आर्षप्रयोगः प्राणेभ्य इत्यर्थे।

,, ६ लज्जति—परस्मैपदम् आर्षम्।

,, ८ विनिष्टनन्तम्—दुःखसूचकस्वनवन्तम् विकृतशब्दं कुर्वन्तमिति यावत्। निःश्वसन्तमिति केचित्। विनि-स्तन-(ष्टन-वन शब्दे भ्वादौ) शतृप्रत्ययान्तस्य द्वितीयैकवचने

रूपम्। अत्र षत्वविधौ वाजसनेयिप्रातिशाख्यसूत्रम्—'स्त्यास्तने:' ३।६९। नेरुत्तरयो: स्त्यास्तनोर्धात्वो: सकार: षत्वमाप्नोति। (अनन्तभट्ट भाष्यम्)

श्लोक: १२ यमक्षयम्—यमालयम्। "निलयापचयौ क्षयौ" इत्यमर:।

" १४ भ्राता सहोदर:—भिन्नोदरप्रसूतत्वेन रामलक्ष्मणयो: सहोदरत्वं कथमायातमिति न विभावनीयम्। (१) एकपितृहृदयवर्तित्वेन अनयो: सहोदरत्वं ज्ञेयम्। (२) किञ्च सह: (सहते इति सह: पचाद्यच्)। स्वीयभ्रातु: भर्त्सनजातस्यापि सहिष्णु:। नास्ति दरो भयं यस्य स: अदर: भयशून्य:। सह:—अदर: अत्र भिन्ने पदे। सन्धौ सहोदर:। एवंविधो भ्राता यत्र विद्यते तं देशं न पश्यामीत्यर्थ:। (३) सहोदर: सहोदरतुल्य:। सहोदरस्य एतादृशं मेलनं क्वचित् संभवेत्। असहोदर: सन्नपि एतादृशो भ्राता यत्र मिलेत् तं देशं न पश्यामि। विभिन्नोदरे एतादृशं सौहार्दं दुर्लभमिति भाव:।

" २४ लक्ष्मिवर्धन:—लक्ष्मि इत्यत्र ह्रस्वत्वं छन्दोऽनुरोधात्।

" ३० विशल्यकरणीम्—विशल्या: क्रियन्ते अनया इति विशल्यकरणी ताम्।
सावर्ण्यकरणीम्—पूर्ववर्णसमानवर्णकरणीम्। अत्र समानस्य स:।

## सीताया: पातालप्रवेश:

रामायणस्य उत्तरकाण्डे सीताया: पातालप्रवेशो वर्णितोऽस्ति। कदाचित् रामश्चरमुखाद् रावणेनापहृताया: सीताया: स्वगृहानयनविषयिणीं पौरजनकुत्सां शुश्राव। अथ स लक्ष्मणादीन् भ्रातॄन् आहूय

सीताविषयकं श्रूयमाणं लोकापवादं ज्ञापयित्वा परेद्युः लक्ष्मणद्वारा महर्षेर्वाल्मीकेराश्रमसमीपे वननिर्झरे अन्तःसत्त्वां सीतां तत्याज। ततो दयार्द्रहृदयो वाल्मीकिरनाथां पतिदेवतां स्वाश्रमं निनाय। तत्र सीताया यमजपुत्रौ जातौ। तयोश्च कुशलवौ इति नाम मुनिना कृतम्। अथ कतिपयेषु वत्सरेषु गतेषु रामेण अश्वमेधयज्ञः समारब्धः। तत्र च कुशलवयोर्मुखाद् रामायणगानं शृण्वन् रामस्तौ सीतापुत्रौ इति विज्ञाय प्रभाते सीता यदि सर्वेषां पुरतः स्वचरित्रविषये शपथं कुर्यात् तर्हि नूनं तां पुनर्ग्रहीष्यामीति वार्तां दूतमुखेन वाल्मीकिं ज्ञापयामास। मुनिना च तथेति अनुमते परेद्युः सर्वसमक्षं शपथकरणावसरे सीतायाः करुणप्रार्थनया तस्या माता पृथ्वी देवी भूतलादुत्थितेन दिव्येन सिंहासनेन पतिव्रतां दुहितरं सीतां पातालं निनाय।

श्लोकः ३ गच्छध्वम्—आत्मनेपदम् आर्षम्।

" ५ छन्दम्—अभिप्रायम्। अस्मिन्नर्थे अदन्तः पुंलिङ्गः। 'अभिप्रायवशौ छन्दा' वित्यमरः।

" १२ काकुत्स्थः—काकुत्स्थस्य (वृषरूपस्य इन्द्रस्य ककुदि तिष्ठतीति ककुत्स्थः) तन्नाम्ना प्रसिद्धस्य सूर्यवंशोद्भवस्य नृपतेर्गोत्रापत्यं पुमान्। 'शिवादिभ्योऽण्' इत्यण्। काकुत्स्थः रामः।

" २० रामं मनोगतं कृत्वा—रामं मनसि ध्यायन्तीत्यर्थः।

" २८ प्रचेतसः दशमः पुत्रः—अपत्यपरम्परया बोध्यः।

" ३८ माधवी देवी—मा लक्ष्मीस्तस्या धवः पतिर्माधवस्तस्य स्त्री माधवी देवी पृथ्वी। माधवेन वराहरूपेण विष्णुना जलादुद्धृता पृथिवी। अथवा मधुनामकदैत्यस्य मेदसो जातत्वात् माधवी।

४३ गृह्य, उपवेशयत्—आर्षौ प्रयोगौ।

## श्रीकृष्णदौत्यम्

अतीते पराशरो नाम कश्चित् महान् ऋषिः आसीत् । तस्मात् दाशराजदुहिता सत्यवती पुत्रम् एकम् असूत यस्य द्वीपे जातत्वात् कृष्णवर्णत्वात् च कृष्णद्वैपायन इति नाम बभूव । वेदविभागात् तस्य सर्वशास्त्रपारङ्गमस्य व्यास इति अपरमपि नाम आसीत् । स व्यासः भरतवंशीयानां कुरुपाण्डवानां वृत्तान्तम् अधिकृत्य महाभारतं नाम अतिकायं ग्रन्थमेकं रचितवान् । तत् लोके इतिहास इति पञ्चमवेद इति च कथ्यते ।

महाभारते पर्वाख्याः अष्टादश भागाः, तेषु प्रत्येकं बहवः अध्यायाः, प्रत्यध्यायं च व बहवः श्लोकाः सन्ति ।

महाभारतस्य उद्योगपर्वणि श्रीकृष्णस्य दौत्यं वर्णितमस्ति । तत्र बहवोऽध्याया वर्तन्ते । तेभ्यः समाहृता अधस्तनाः श्लोकाः ।

कौरवपाण्डवोभयपक्षहितेच्छया श्रीकृष्णः सन्धिसंस्थापनाय कौरवसमितिं समागतः । सर्वथा युक्तियुक्तं श्रीकृष्णस्य सन्धिप्रस्तावं श्रुत्वा धृतराष्ट्रादयः सर्वे सम्मता आसन् । ईर्ष्यापरायणो राजा दुर्योधनस्तु सूच्यग्रपरिमितामपि भूमिं पाण्डवेभ्यो न दास्यामि युद्धमनिवार्यमित्युक्त्वा श्रीकृष्णस्य प्रस्तावं प्रत्याख्यातवान् । श्रीकृष्णस्तु प्रत्याख्यानमिदं नैव शुभावहमिति दुर्योधनमुपालेभे ।

श्लोकः १८ मा नीनशः—नश्-णिच्-लुङि परस्मैपदमध्यमपुरुषैकवचने रूपम् । 'माङि लुङ्' इति लुङ्, न माङ्योगे इत्यडागमप्रतिषेधश्च ।

" २७ अवमंस्थाः—अव-मन्धातोर्लुङि आत्मनेपदमध्यमपुरुषैकवचने रूपम् । अन्यत् पूर्ववत् ।

" ३७ दाशार्हः—दशार्हःवृष्णिवंशीयो नृपविशेषः । तस्य गोत्रापत्यं पुमानित्यर्थे दशार्हशब्दात् अण्-प्रत्ययेन दाशार्ह इति प्रथमैकवचने रूपम् ।

## धृतराष्ट्रविलापः

महाभारतस्य आदिपर्वणि प्रथमाध्याये अयमंशो दृश्यते। केनचिन्निमित्तेन परप्राबल्ये निश्चिते प्राकृता अपि जना बलवता सह प्रसङ्गं न कुर्वन्ति धृतराष्ट्रपुत्रस्तु जयाशाविच्छेदकेष्वनेकेषु निमित्तेषु दृष्टेष्वपि तं न जहौ। अहो मोहस्य माहात्म्यमिति वर्णयन् कविः सप्तषष्टया श्लोकैः महाभारतार्थं संगृहीतवान्। तेषु श्लोकेषु एकत्रिंशत् श्लोका अत्र निबद्धाः।

श्लोकः १ प्रेक्षताम्––शतृप्रयोग आर्षः। शानचि प्रेक्षमाणानाम् इति स्यात्। सर्वराज्ञाम्––समासान्तटजभाव आर्षः। टचि सर्वराजानाम् इति भवेत्।

" ६ प्रसह्य––बलेन। दण्डेनैव इत्यर्थः। अव्ययपदमेतत्।

" ७ अक्षवत्याम्––पाशकवत्यां द्यूतक्रीडायाम्।

" ८ तोष्य––आर्ष पदम्। तुष्-णिच्+क्त्वा-प्रत्यये तोषयित्वा इति साधु।

" १३ मत्स्यराज्ञा––पूर्ववत् टजभाव आर्षः। टचि मत्स्यराजेन इति स्यात्।

" १४ गाम्—पृथिवीम्। विक्रमम्—पदक्षेपम्।

" १८ सीदमाने—शानच्-प्रत्यय आर्षः। परस्मैपदीयत्वात् 'सद्'-धातोः शतृप्रत्यये सप्तम्येकवचने सीदति इति स्यात्।

" १९ आपगेयेन––गङ्गापुत्रेण भीष्मेण। अपां समूहः अण्-प्रत्ययेन आपम्। आपेन गच्छतीति आप-गम्+ड स्त्रियाम् आपगा नदी इत्यर्थः। आपगाया नद्या अत्र गङ्गाया अपत्यं पुमान् आपगा+ढक्। संख्ये—युद्धे।

" २१ व्यूहम्––सैन्यसंस्थानम्, बलसन्निवेशम्। आत्तशस्त्रेण–आत्तं गृहीतं शस्त्रं येन तेन। आङ्-दा+क्त––आत्त।

श्लोक: २३ व्यंसिताम्—व्यर्थीकृताम्। चुरादिगणीयाद् व्यंस-धातोः कर्मणि क्तः। स्त्रियाम् आप्।

" २४ प्रायगतम्—मरणार्थम् अनशनं प्रायः, तं गतम्। मरणार्थं कृतानशनम् त्यक्ताहारम् इत्यर्थः। विशस्तम्—छिन्नम्। वि-शस्+कर्मणिक्तः।

## विदुरस्य सुभाषितानि

विदुरः महाराजं धृतराष्ट्रं बहुश उपदिदेश। तस्योपदेशाः खलु उद्योगपर्वणि त्रयस्त्रिंशत्तमाध्यायात् प्रभृति उपलभ्यन्ते।

श्लोक: ४ मान्यमानिता—मान्यं मानार्हम् आत्मानं मन्यत इति मान्यमानी; तस्य भावः।

" १० तत्त्वज्ञः—तत्त्वं विनाशित्वं जानाति।

" " भूतानाम्—ऐश्वर्यादीनाम्।

" " योगज्ञः—योगः रचनाप्रकारः। तं जानाति।

" " मनुष्याणाम्—मध्ये इति शेषः।

" १४ चिरं शृणोति—ज्ञानदाढर्याय।

" " असंपृष्टः—यथावद् अपृष्टः।

" " उपयुङ्क्ते—वाग्व्ययं करोति।

" १७ संसारयति—भृत्यादिद्वारा प्रवर्तयति।

" २१ दृतेः—चर्ममयस्य जलपात्रस्य।

" २२ स्वप्रत्यया—स्वानुकूला।

" ३० सुवर्णपुष्पाम्—सुवर्णं धनादिकं पुष्पं यस्याः ताम्।

" ३४ पश्यन्ति—जानन्तीत्यर्थः।

" ३६ रोहते—आर्षः प्रयोगः।

## अर्जुनविषादः

महाभारतस्य भीष्मपर्वणि अमृतमयी गीता अष्टादशभिः अध्यायैर्भगवता श्रीकृष्णेन अर्जुनाय उक्ता अस्ति यस्या भगवद्गीता ईश्वरगीता अर्जुनगीता इति च नामान्तराणि । गीता धर्ममयी सर्वशास्त्रसारभूता, अतः सर्वैरेव सततम् आदरणीया, धर्मज्ञानार्थं च सयत्नम् अध्येतव्या ।

अतीते राज्यलाभार्थं युयुत्सूनां कुरूणां पाण्डवानां च अष्टादशदिवसान् व्याप्य कुरुक्षेत्रे महद् युद्धम् अभूत् । तस्मिन् युद्धे श्रीकृष्णः अर्जुनस्य सारथ्यं चकार । युद्धस्य प्रारम्भे समवेतान् स्वजनान् दृष्ट्वा अर्जुनः विषादयुक्तः सन् युद्धं नैच्छत् । अतः श्रीकृष्णः तस्य मोहापनोदाय गीताम् उपदिदेश । धृतराष्ट्रमन्त्री सञ्जयश्च व्यासप्रसादाद् दिव्यदृष्टिं लब्ध्वा सर्वं प्रत्यक्षं ज्ञात्वा अन्धनृपतये यथायथं कथयामास । इत्थमेव गीताया उत्पत्तिः आसीत् ।

श्लोकः १ युयुत्सून्—योद्धुकामान्, युद्धाभिलाषिणः । युध्-सन्+उ द्वितीयाबहुवचने रूपम् ।

,, २ गाण्डीवम्—अर्जुनस्य धनुः । तच्च तेन खाण्डवदहने अग्नेः सहायको भूत्वा प्राप्तम् ।

,, ४ आहवे—युद्धे । आहूयन्ते शत्रवः अस्मिन् इति आङ ह्वे+अप् ।

,, ८ आततायिनः—आततेन विस्तीर्णेन शस्त्रादिना (हननार्थम्) अयितुं शीलं येषां तान् । शत्रून् ।

अग्निदो गरदश्चैव शस्त्रोन्मत्तो धनापहः ।
क्षेत्रदारहरश्चैतान् षड् विद्याद् आततायिनः ।।

,, १० पातकम्—पातयतीति पत्-णिच्+ण्वुल् कर्तरि । जातिभ्रंशकरं पापम् ।

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ।।

श्लोकः १४ व्यवसिताः—उद्युक्ताः, प्रवृत्ताः। वि-अव-सो+क्त कर्तरि।

## समुन्द्रमन्थनम्

मात्स्य-कौर्म-वायवीय-मार्कण्डेयादीनि अष्टादश पुराणानि यानि महा-पुराणानि इति कथ्यन्ते। एतद्व्यतिरिक्तानि बहूनि उपपुराणानि सन्ति। पुराणवत् उपपुराणानि अपि अष्टादश इति पौराणिकी प्रसिद्धिः। परंतु अष्टादशभ्यः अधिकानि बहूनि उपपुराणानि दृश्यन्ते। अधुना लभ्यानां पुराणोपपुराणानां मध्ये कानिचित् अतिप्राचीनानि इति पुराणशास्त्रविदां मतम्।

पुराणानि प्रत्येकं पञ्चलक्षणैर्युक्तानि, यथोक्तं मत्स्यपुराणे—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम्॥

इति। तेषाम् अष्टादशानां पुराणानाम् एकतमं वसिष्ठनप्त्रा शक्तिपुत्रेण पराशरेण मैत्रेयाय ऋषये प्रोक्तम् आसीत्। विष्णमाहात्म्यम् अवलम्ब्य रचितमेतद् विष्णुपुराणाख्यया लोके प्रसिद्धिम् अगच्छत्।

विष्णुपुराणस्य षड् अंशाः। तत्र प्रथमांशे नवमाध्याये सर्गकथन-क्रमेण पराशरः विष्णुपत्न्याः श्रियः क्षीरसागरात् समुत्पत्तिं वर्णयामास। सा च श्रीसमुत्पत्तिः समुद्रमथनपूर्विका आसीत्। दुर्वाससः शापेन प्रनष्ट-लक्ष्मीकस्य देवराजस्य श्रीसंपादनाय यथा सुरा असुरैः सह मिलित्वा क्षीरा-ब्धिमन्थनं चक्रुः तत् सर्वं पराशरेण अत्राध्याये वर्णितम् अस्ति।

श्लोकः १ विद्याधरीकरे—विद्यां मन्त्रादिकं धरति इति विद्याधरः देवयोनिविशेषः। तज्जातीया स्त्री तस्याः करे हस्ते।

" २ उन्मत्तव्रतधृक्—योगिनो हि जडोन्मत्तपिशाचा इव वर्तन्ते।

" १३ प्रनष्टलक्ष्मीकम्—प्रनष्ट इत्यत्र 'नशेः षान्तस्य' इति सूत्रेण णत्वाभावः।

